# SANSKRIT-CHRESTOMATHIE

HERAUSGEGEBEN

VON

Otto Böhtlingk.

Zweite, gänzlich umgearbeitete Auflage.

St. Petersburg, 1877.

Commissionäre der Kaiserlichen Akademie der Wissenschaften:

in St. Petersburg: Eggers & Co., J. Issakoff, J. Glasunoff; in Riga: N. Kymmel; in Leipzig: Leopold Voss.

Preis: 1 Rbl. 45 Kop. = 4 Mark 80 Pfen.

# VORWORT.

An die Ausarbeitung dieser neuen Auflage der Chrestomathie bin ich erst dann gegangen, als ich die feste Ueberzeugung gewonnen hatte, dass sie von vielen Seiten gewünscht werde. Dem Inhalte nach ist sie mannichfaltiger, als alle bis jetzt erschienenen. Sie bietet keine bisher ungedruckten Texte, aber das Bekannte tritt in einem mehr oder weniger neuen Gewande auf. Mit der Verzeichnung der abweichenden Lesarten habe ich das Buch nicht beladen wollen, jede eigenmächtige Aenderung aber, mit Ausnahme von Interpunctionen, ist gewissenhaft angegeben worden. In den epischen Stücken habe ich überschüssige Halbverse stillschweigend ausgeschieden.

Das letzte Stück, die Ratnâvalî, haben wir Prof. Carl Cappeller zu verdanken, der keinen Augenblick angestanden hat, diese mühevolle und verdienstliche Arbeit in anspruchloser Weise der Chrestomathie einzuverleiben.

Ein schon in Angriff genommenes Sanskrit-Deutsches Handwörterbuch wird, wenn es mir vergönnt sein sollte, dasselbe zu Ende zu führen, als nothwendige Ergänzung zu dieser Chrestomathie und als eine Art von Supplement zum grossen Wörterbuch von den Freunden der Sanskrit-Literatur, so hoffe ich, willkommen geheissen werden.

Jena, den 22. Mai 1877.

**O. Böhtlingk.**

# I. Ṛgveda.

### 1. An die Âditja (1, 41).

यं रक्षन्ति प्रचेतसः । वरुणो मित्रो अर्यमा । नू चित्स दभ्यते जनः ॥ १ ॥
यं बाहुतेव पिप्रति । पान्ति मर्त्यं रिषः । अरिष्टः सर्व एधते ॥ २ ॥
वि दुर्गा वि द्विषः पुरः । घ्नन्ति राजान एषाम् । नयन्ति दुरिता तिरः ॥ ३ ॥
सुगः पन्था अनृक्षरः । आदित्यास ऋतं यते । नात्रावखादो अस्ति वः ॥ ४ ॥
5 यं यज्ञं नयथा नरः । आदित्या ऋजुना पथा । प्र वः स धीतये नशत् ॥ ५ ॥
स रत्नं मर्त्यो वसु । विश्वं तोकमुत त्मना । अच्छा गच्छत्यस्तृतः ॥ ६ ॥
कथा राधाम सखायः । स्तोमं मित्रस्यार्यम्णः । महि प्सरो वरुणस्य ॥ ७ ॥
मा वो घ्नन्तं मा शपन्तम् । प्रति वोचे देवयन्तम् । सुम्नैरिद्व आ विवासे ॥ ८ ॥
चतुरश्चिद्ददमानात् । बिभीयादा निधातोः । न दुरुक्ताय स्पृहयेत् ॥ ९ ॥

---

### 2. An Pûshan (1, 42).

10 सं पूषन्नध्वनस्तिर । व्यंहो विमुचो नपात् । सक्ष्वा देव प्र णस्पुरः ॥ १ ॥
यो नः पूषन्नघो वृकः । दुःशेव आदिदेशति । अप स्म तं पथो जहि ॥ २ ॥
अप त्यं परिपन्थिनम् । मुषीवाणं हुरश्चितम् । दूरमधि स्रुतेरज ॥ ३ ॥
त्वं तस्य द्वयाविनः । अघशंसस्य कस्य चित् । पदाभि तिष्ठ तपुषिम् ॥ ४ ॥
आ तत्ते दस्र मन्तुमः । पूषन्नवो वृणीमहे । येन पितॄनचोदयः ॥ ५ ॥
15 अधा नो विश्वसौभग । हिरण्यवाशीमत्तम । धनानि सुषणा कृधि ॥ ६ ॥
अति नः सश्चतो नय । सुगा नः सुपथा कृणु । पूषन्निह क्रतुं विदः ॥ ७ ॥
अभि सूयवसं नय । न नवज्वारो अध्वने । पूषन्निह क्रतुं विदः ॥ ८ ॥
शग्धि पूर्धि प्र यंसि च । शिशीहि प्रास्युदरम् । पूषन्निह क्रतुं विदः ॥ ९ ॥
न पूषणं मेथामसि । सूक्तैरभि गृणीमसि । वसूनि दस्ममीमहे ॥ १० ॥

---

### 3. An Sûrja (1, 115).

चित्रं देवानामुदगादनीकम् । चक्षुर्मित्रस्य वरुणस्याग्नेः ।
आप्रा द्यावा पृथिवी अन्तरिक्षम् । सूर्य आत्मा जगतस्तस्थुषश्च ॥ १ ॥
सूर्यो देवीमुषसं रोचमानाम् । मर्यो न योषामभि एति पश्चात् ।
यत्रा नरो देवयन्तो युगानि । वितन्वते प्रति भद्राय भद्रम् ॥ २ ॥
5 भद्रा अश्वा हरितः सूर्यस्य । चित्रा एतग्वा अनुमाद्यासः ।
नमस्यन्तो दिव आ पृष्ठमस्थुः । परि द्यावा पृथिवी यन्ति सद्यः ॥ ३ ॥
तत्सूर्यस्य देवत्वं तन्महित्वम् । मध्या कर्तोर्विततं सं जभार ।
यदेदयुक्त हरितः सधस्थात् । आद्रात्री वासस्तनुते सिमस्मै ॥ ४ ॥
तन्मित्रस्य वरुणस्याभिचक्षे । सूर्यो रूपं कृणुते द्योरुपस्थे ।
10 अनन्तमन्यद्रुशदस्य पाजः । कृष्णमन्यद्धरितः सं भरन्ति ॥ ५ ॥
अद्या देवा उदिता सूर्यस्य । निरंहसः पिपृता निरवद्यात् ।
तन्नो मित्रो वरुणो मामहन्ताम् । अदितिः सिन्धुः पृथिवी उत द्यौः ॥ ६ ॥

---

### 4. An Agni (1, 143).

प्र तव्यसीं नव्यसीं धीतिमग्नये । वाचो मतिं सहसः सूनवे भरे ।
अपां नपाद्यो वसुभिः सह प्रियः । होता पृथिव्यां नि असीददृत्वियः ॥ १ ॥
15 स जायमानः परमे व्योमनि । आविरग्निरभवन्मातरिश्वने ।
अस्य क्रत्वा समिधानस्य मज्मना । प्र द्यावा शोचिः पृथिवी अरोचयत् ॥ २ ॥
अस्य त्वेषा अजरा अस्य भानवः । सुसंदृशः सुप्रतीकस्य सुद्युतः ।
भात्वक्षसो अति अक्तुर्न सिन्धवः । अग्ने रेजन्ते अससन्तो अजराः ॥ ३ ॥
यमेरिरे भृगवो विश्ववेदसम् । नाभा पृथिव्या भुवनस्य मज्मना ।
20 अग्निं तं गीर्भिर्हिनुहि स्व आ दमे । य एको वस्वो वरुणो न राजति ॥ ४ ॥
न यो वराय मरुतामिव स्वनः । सेनेव सृष्टा दिव्या यथाशनिः ।
अग्निर्जम्भैस्तिगितैरत्ति भर्वति । योधो न शत्रून्स वना नि ऋञ्जते ॥ ५ ॥
कुविन्नो अग्निरुचथस्य वीरसत् । वसुष्कुविद्वसुभिः काममावरत् ।
चोदः कुवित्तुतुज्यात्सातये धियः । शुचिप्रतीकं तमया धिया गृणे ॥ ६ ॥
25 घृतप्रतीकं व ऋतस्य धूर्षदम् । अग्निं मित्रं न समिधान ऋञ्जते ।
इन्धानो अक्रो विदथेषु दीदियत् । शुक्रवर्णामुदु नो यंसते धियम् ॥ ७ ॥
अप्रयुच्छन्नप्रयुच्छद्भिरग्ने । शिवेभिर्नः पायुभिः पाहि शग्मैः ।
अदब्धेभिरदृपितेभिरिष्टे । अनिमिषद्भिः परि पाहि नो जाः ॥ ८ ॥

---

### 5. An Vishṇu (1,154).

विष्णोर्नु कं वीर्याणि प्र वोचम् । यः पार्थिवानि विममे रजांसि ।
यो अस्कभायदुत्तरं सधस्थम् । विचक्रमाणस्त्रेधोरुगायः ॥ १ ॥
प्र तद्विष्णुः स्तवते वीर्येण । मृगो न भीमः कुचरो गिरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेषु । अधिक्षियन्ति भुवनानि विश्वा ॥ २ ॥
5 प्र विष्णवे शूषमेतु मन्म । गिरिक्षित उरुगायाय वृष्णे ।
य इदं दीर्घं प्रयतं सधस्थम् । एको विममे त्रिभिरित्पदेभिः ॥ ३ ॥
यस्य त्री पूर्णा मधुना पदानि । अक्षीयमाणा स्वधया मदन्ति ।
य उ त्रिधातु पृथिवीमुत द्याम् । एको दाधार भुवनानि विश्वा ॥ ४ ॥
तदस्य प्रियमभि पाथो अश्याम् । नरो यत्र देवयवो मदन्ति ।
10 उरुक्रमस्य स हि बन्धुरित्था । विष्णोः पदे परमे मध्व उत्सः ॥ ५ ॥
ता वां वास्तून्युश्मसि गमध्यै । यत्र गावो भूरिशृङ्गा अयासः ।
अत्राह तदुरुगायस्य वृष्णः । परमं पदमव भाति भूरि ॥ ६ ॥

---

### 6. An Indra (2,12).

यो जात एव प्रथमो मनस्वान् । देवो देवान्क्रतुना पर्यभूषत् ।
यस्य शुष्माद्रोदसी अभ्यसेताम् । नृम्णस्य मह्ना स जनास इन्द्रः ॥ १ ॥
15 यः पृथिवीं व्यथमानामदृंहत् । यः पर्वतान्प्रकुपिताँ अरम्णात् ।
यो अन्तरिक्षं विममे वरीयः । यो द्यामस्तभ्नात्स जनास इन्द्रः ॥ २ ॥
यो हत्वाहिमरिणात्सप्त सिन्धून् । यो गा उदाजदपधा वलस्य ।
यो अश्मनोरन्तरग्निं जजान । संवृक्समत्सु स जनास इन्द्रः ॥ ३ ॥
येनेमा विश्वा च्यवना कृतानि । यो दासं वर्णमधरं गुहाकः ।
20 श्वघ्नीव यो जिगीवाँल्लक्षमादत् । अर्यः पुष्टानि स जनास इन्द्रः ॥ ४ ॥
यं स्मा पृच्छन्ति कुह सेति घोरम् । उतेमाहुर्नैषो अस्तीति एनम् ।
सो अर्यः पुष्टीर्विज इवा मिनाति । श्रदस्मै धत्त स जनास इन्द्रः ॥ ५ ॥
यो रध्रस्य चोदिता यः कृशस्य । यो ब्रह्मणो नाधमानस्य कीरेः ।
युक्तग्राव्णो यो अविता सुशिप्रः । सुतसोमस्य स जनास इन्द्रः ॥ ६ ॥
25 यस्याश्वासः प्रदिशि यस्य गावः । यस्य ग्रामा यस्य विश्वे रथासः ।
यः सूर्यं य उषसं जजान । यो अपां नेता स जनास इन्द्रः ॥ ७ ॥
यं क्रन्दसी संयती विह्वयेते । परे अवर उभया अमित्राः ।
समानं चिद्रथमातस्थिवांसा । नाना हवेते स जनास इन्द्रः ॥ ८ ॥
यस्मान्न ऋते विजयन्ते जनासः । यं युध्यमाना अवसे हवन्ते ।
30 यो विश्वस्य प्रतिमानं बभूव । यो अच्युतच्युत्स जनास इन्द्रः ॥ ९ ॥

यः शश्वतो महि एनो दधानान् । अमन्यमानाञ्छर्वा जघान ।
यः शर्धते नानुददाति शृध्याम् । यो दस्योर्हन्ता स जनास इन्द्रः ॥ १० ॥
यः शम्बरं पर्वतेषु क्षियन्तम् । चत्वारिंश्यां शरदि अन्वविन्दत् ।
ओजायमानं यो अहिं जघान । दानुं शयानं स जनास इन्द्रः ॥ ११ ॥
5 यः सप्तरश्मिर्वृषभस्तुविष्मान् । अवासृजत्सर्तवे सप्त सिन्धून् ।
यो रौहिणमस्फुरद्वज्रबाहुः । द्यामारोहन्तं स जनास इन्द्रः ॥ १२ ॥
द्यावा चिदस्मै पृथिवी नमेते । शुष्माच्चिदस्य पर्वता भयन्ते ।
यः सोमपा निचितो वज्रबाहुः । यो वज्रहस्तः स जनास इन्द्रः ॥ १३ ॥
यः सुन्वन्तमवति यः पचन्तम् । यः शंसन्तं यः शशमानमूती ।
10 यस्य ब्रह्म वर्धनं यस्य सोमः । यस्येदं राधः स जनास इन्द्रः ॥ १४ ॥
यः सुन्वते पचते दुध्र आ चित् । वाजं दर्दर्षि स किलासि सत्यः ।
वयं त इन्द्र विश्वह प्रियासः । सुवीरासो विदथमा वदेम ॥ १५ ॥

---

### 7. An die Âditja (2,27).

इमा गिर आदित्येभ्यो घृतस्नूः । सनाद्राजभ्यो जुह्वा जुहोमि ।
शृणोतु मित्रो अर्यमा भगो नः । तुविजातो वरुणो दक्षो अंशः ॥ १ ॥
15 इमं स्तोमं सक्रतवो मे अद्य । मित्रो अर्यमा वरुणो जुषन्त ।
आदित्यासः शुचयो धारपूताः । अवृजिना अनवद्या अरिष्टाः ॥ २ ॥
त आदित्यास उरवो गभीराः । अदब्धासो दिप्सन्तो भूर्यक्षाः ।
अन्तः पश्यन्ति वृजिनोत साधु । सर्वं राजभ्यः परमा चिदन्ति ॥ ३ ॥
धारयन्त आदित्यासो जगत्स्थाः । देवा विश्वस्य भुवनस्य गोपाः ।
20 दीर्घाधियो रक्षमाणा असुर्यम् । ऋतावानश्चयमाना ऋणानि ॥ ४ ॥
विद्यामादित्या अवसो वो अस्य । यदर्यमन्भय आ चिन्मयोभु ।
युष्माकं मित्रावरुणा प्रणीतौ । परि श्वभ्रेव दुरितानि वृज्याम् ॥ ५ ॥
सुगो हि वो अर्यमन्मित्र पन्थाः । अनृक्षरो वरुण साधुरस्ति ।
तेनादित्या अधि वोचता नः । यच्छता नो दुष्परिहन्तु शर्म ॥ ६ ॥
25 पिपर्तु नो अदिती राजपुत्रा । अति द्वेषांसि अर्यमा सुगेभिः ।
बृहन्मित्रस्य वरुणस्य शर्म । उप स्याम पुरुवीरा अरिष्टाः ॥ ७ ॥
तिस्रो भूमीर्धारयन्त्रीँरुत द्यून् । त्रीणि व्रता विदथे अन्तरेषाम् ।
ऋतेनादित्या महि वो महित्वम् । तदर्यमन्वरुण मित्र चारु ॥ ८ ॥
त्री रोचना दिव्या धारयन्त । हिरण्ययाः शुचयो धारपूताः ।
30 अस्वप्नजो अनिमिषा अदब्धाः । उरुशंसा ऋजवे मर्त्याय ॥ ९ ॥

त्वं विश्वेषां वरुणासि राजा । ये च देवा असुर ये च मर्ताः ।
शतं नो रास्व शरदो विचक्षे । अश्यामायूंषि सुधितानि पूर्वा ॥ १० ॥
न दक्षिणा वि चिकिते न सव्या । न प्राचीनमादित्या नोत पश्चा ।
पाक्या चिद्वसवो धीर्या चित् । युष्मानीतो अभयं ज्योतिरश्याम् ॥ ११ ॥
5 यो राजभ्य ऋतनिभ्यो ददाश । यं वर्धयन्ति पुष्टयश्च नित्याः ।
स रेवान्याति प्रथमो रथेन । वसुदावा विदथेषु प्रशस्तः ॥ १२ ॥
शुचिरपः सूयवसा अदब्धः । उप क्षेति वृद्धवयाः सुवीरः ।
नकिष्टं घ्नन्ति अन्तितो न दूरात् । य आदित्यानां भवति प्रणीतौ ॥ १३ ॥
अदिते मित्र वरुणोत मृळ । यद्वो वयं चकृमा कच्चिदागः ।
10 उर्वश्यामभयं ज्योतिरिन्द्र । मा नो दीर्घा अभि नशन्तमिस्राः ॥ १४ ॥
उभे अस्मै पीपयतः समीची । दिवो वृष्टिं सुभगो नाम पुष्यन् ।
उभा क्षयावाजयन्याति पृत्सु । उभावर्धौ भवतः साधू अस्मै ॥ १५ ॥
या वो माया अभिद्रुहे यजत्राः । पाशा आदित्या रिपवे विचृत्ताः ।
अश्वीव ताँ अति येषं रथेन । अरिष्टा उरावा शर्मन्त्सियाम ॥ १६ ॥
15 माहं मघोनो वरुण प्रियस्य । भूरिदाव्न आ विदं शूनमापेः ।
मा रायो राजन्त्सुयमादव स्थाम् । बृहद्वदेम विदथे सुवीराः ॥ १७ ॥

---

**8. Viçvâmitra's Unterredung mit den Flüssen Vipâç und Çutudrî (3, 33).**

Viçvâmitra:

प्र पर्वतानामुशती उपस्थात् । अश्वे इव विषिते हासमाने ।
गावेव शुभ्रे मातरा रिहाणे । विपाट्छुतुद्री पयसा जवेते ॥ १ ॥
इन्द्रेषिते प्रसवं भिक्षमाणे । अच्छा समुद्रं रथ्येव याथः ।
20 समाराणे ऊर्मिभिः पिन्वमाने । अन्या वामन्यामप्येति शुभ्रे ॥ २ ॥
अच्छा सिन्धुं मातृतमामयासम् । विपाशमुर्वीं सुभगामगन्म ।
वत्समिव मातरा संरिहाणे । समानं योनिमनु संचरन्ती ॥ ३ ॥

Die Flüsse:

एना वयं पयसा पिन्वमानाः । अनु योनिं देवकृतं चरन्तीः ।
न वर्तवे प्रसवः सर्गतक्तः । किंयुर्विप्रो नद्यो जोहवीति ॥ ४ ॥

Viçvâmitra:

25 रमध्वं मे वचसे सोम्याय । ऋतावरीरुप मुहूर्तमेवैः ।
प्र सिन्धुमच्छा बृहती मनीषा । अवस्युरह्वे कुशिकस्य सूनुः ॥ ५ ॥

**Die Flüsse:**

इन्द्रो अस्माँ अरदद्वज्रबाहुः । अपाहन्वृत्रं परिधिं नदीनाम् ।
देवो अनयत्सविता सुपाणिः । तस्य वयं प्रसवे याम उर्वीः ॥ ६ ॥

**Viçvâmitra:**

प्रवाचियं शश्वधा वीरियं तत् । इन्द्रस्य कर्म यदहिं विवृश्चत् ।
वि वज्रेण परिषदो जघान । आयन्नापो अयनमिच्छमानाः ॥ ७ ॥

**Die Flüsse:**

5 एतद्वचो जरितर्मापि मृष्ठाः । आ यत्ते घोषानुत्तरा युगानि ।
उक्थेषु कारो प्रति नो जुषस्व । मा नो नि कः पुरुषत्रा नमस्ते ॥ ८ ॥

**Viçvâmitra:**

ओ षु स्वसारः कारवे शृणोत । ययौ वो दूरादनसा रथेन ।
नि षू नमध्वं भवता सुपाराः । अधोअक्षाः सिन्धवः स्रोतियाभिः ॥ ९ ॥

**Die Flüsse:**

आ ते कारो शृणवामा वचांसि । ययाथ दूरादनसा रथेन ।
10 नि ते नंसै पीपियानेव योषा । मर्यायेव कनिया शश्वचै ते ॥ १० ॥

**Viçvâmitra:**

यदङ्ग त्वा भरताः संतरेयुः । गव्यन्ग्राम इषित इन्द्रजूतः ।
अर्षादह प्रसवः सर्गतक्तः । आ वो वृणे सुमतिं यज्ञियानाम् ॥ ११ ॥
अतारिषुर्भरता गव्यवः सम् । अभक्त विप्रः सुमतिं नदीनाम् ।
प्र पिन्वध्वमिषयन्तीः सुराधाः । आ वक्षणाः पृणध्वं यात शीभम् ॥ १२ ॥

---

### 9. An Mitra (3,59).

15 मित्रो जनान्यातयति ब्रुवाणः । मित्रो दाधार पृथिवीमुत द्याम् ।
मित्रः कृष्टीरनिमिषाभि चष्टे । मित्राय हव्यं घृतवज्जुहोत ॥ १ ॥
प्र स मित्र मर्तो अस्तु प्रयस्वान् । यस्त आदित्य शिक्षति व्रतेन ।
न हन्यते न जीयते त्वोतः । नैनमंहो अश्नोत्यन्तितो न दूरात् ॥ २ ॥
अनमीवास इळया मदन्तः । मितज्ञवो वरिमन्ना पृथिव्याः ।
20 आदित्यस्य व्रतमुपक्षियन्तः । वयं मित्रस्य सुमतौ सियाम ॥ ३ ॥
अयं मित्रो नमस्यः सुशेवः । राजा सुक्षत्रो अजनिष्ट वेधाः ।
तस्य वयं सुमतौ यज्ञियस्य । अपि भद्रे सौमनसे सियाम ॥ ४ ॥
महाँ आदित्यो नमसोपसद्यः । यातयज्जनो गृणते सुशेवः ।
तस्मा एतत्पन्यतमाय जुष्टम् । अग्नौ मित्राय हविरा जुहोत ॥ ५ ॥

मित्रस्य चर्षणीधृतः । अवो देवस्य सानसि । द्युम्नं चित्रश्रवस्तमम् ॥ ६ ॥
अभि यो महिना दिवम् । मित्रो बभूव सप्रथाः । अभि श्रवोभिः पृथिवीम् ॥ ७ ॥
मित्राय पञ्च येमिरे । जना अभिष्टिशवसे । स देवान्विश्वान्बिभर्ति ॥ ८ ॥
मित्रो देवेषु आयुषु । जनाय वृक्तबर्हिषे । इष इष्टव्रता अकः ॥ ९ ॥

---

### 10. An Indra (4,19).

5 एवा तुवामिन्द्र वज्रिन्नत्र । विश्वे देवासः सुहवास ऊमाः ।
महामुभे रोदसी वृद्धमृष्वम् । निरेकमिद्वृणते वृत्रहत्ये ॥ १ ॥
अवासृजन्त जिव्रयो न देवाः । भुवः सम्राळिन्द्र सत्ययोनिः ।
अहन्नहिं परिशयानमर्णः । प्र वर्तनीररदो विश्वधेनाः ॥ २ ॥
अतृप्णुवन्तं वियतमबुध्यम् । अबुध्यमानं सुषुपाणमिन्द्र ।
10 सप्त प्रति प्रवत आशयानम् । अहिं वज्रेण वि रिणा अपर्वन् ॥ ३ ॥
अक्षोदयच्छवसा क्षाम बुध्नम् । वार्ण वातस्तविषीभिरिन्द्रः ।
दृळ्हा नि औभ्नादुशमान ओजः । अवाभिनत्ककुभः पर्वतानाम् ॥ ४ ॥
अभि प्र दद्रुर्जनयो न गर्भम् । रथा इव प्र ययुः साकमद्रयः ।
अतर्पयो विसृत उब्ज ऊर्मीन् । तुवं वृताँ अरिणा इन्द्र सिन्धून् ॥ ५ ॥
15 तुवं महीमवनिं विश्वधेनाम् । तुर्वीतये वयियाय क्षरन्तीम् ।
अरमयो नमसा एजदर्णः । सुतरणाँ अकृणोरिन्द्र सिन्धून् ॥ ६ ॥
प्र अग्रुवो नभनुवो न वक्वाः । ध्वस्रा अपिन्वद्युवतीर्ऋतज्ञाः ।
धन्वानि अज्राँ अपृणक्तृषाणान् । अधोगिन्द्रः स्तरियो दंसुपत्नीः ॥ ७ ॥
पूर्वीरुषसः शरदश्च गूर्ताः । वृत्रं जघन्वाँ असृजद्वि सिन्धून् ।
20 परिष्ठिता अतृणद्बद्बधानाः । सीरा इन्द्रः स्रवितवे पृथिव्या ॥ ८ ॥
वम्रीभिः पुत्रमग्रुवो अदानम् । निवेशनाद्धरिव आ जभर्थ ।
वि अन्धो अख्यदहिमाददानः । निर्भूदुखच्छित्समरन्त पर्व ॥ ९ ॥
प्र ते पूर्वाणि करणानि विप्र । आविद्वाँ आह विदुषे करांसि ।
यथा यथा वृष्णियानि स्वगूर्ता । अपांसि राजन्नर्याविवेषीः ॥ १० ॥
25 नू उ ष्टुत इन्द्र नू उ गृणानः । इषं जरित्रे नदियो न पीपेः ।
अकारि ते हरिवो ब्रह्म नव्यम् । धिया सियाम रथियः सदासाः ॥ ११ ॥

---

### 11. An Indra (4,30).

नकिरिन्द्र त्वदुत्तरः । न ज्यायाँ अस्ति वृत्रहन् । नकिरेवा यथा तुवम् ॥ १ ॥
सत्रा ते अनु कृष्टयः । विश्वा चक्रेव वावृतुः । सत्रा महाँ असि श्रुतः ॥ २ ॥

विश्वे चनेदना त्वा । देवास इन्द्र युयुधुः । यदहा नक्तमातिरः ॥ ३ ॥
यत्रोत बाधितेभ्यः । चक्रं कुत्साय युध्यते । मुषाय इन्द्र सूर्यम् ॥ ४ ॥
यत्र देवाँ ऋघायतः । विश्वाँ अयुध्य एक इत् । त्वमिन्द्र वनूँरहन् ॥ ५ ॥
यत्रोत मर्त्याय कम् । अरिणा इन्द्र सूर्यम् । प्रावः शचीभिरेतशम् ॥ ६ ॥
5 किमादुतासि वृत्रहन् । मघवन्मन्युमत्तमः । अत्राह दानुमातिरः ॥ ७ ॥
दिवश्चिद्घा दुहितरम् । महान्महीयमानाम् । उषासमिन्द्र सं पिणक् ॥ ९ ॥
अपोषा अनसः सरत् । संपिष्टादह बिभ्युषी । नि यत्सीं शिश्नथद्वृषा ॥ १० ॥
एतदस्या अनः शये । सुसंपिष्टं विपाश्या । ससार सीं परावतः ॥ ११ ॥
उत सिन्धुं विबाल्यम् । वितस्थानामधि क्षमि । परि ष्ठा इन्द्र मायया ॥ १२ ॥
10 उत शुष्णस्य धृष्णुया । प्र मृक्षो अभि वेदनम् । पुरो यदस्य संपिणक् ॥ १३ ॥
उत दासं कौलितरम् । बृहतः पर्वतादधि । अवाहन्निन्द्र शम्बरम् ॥ १४ ॥
उत दासस्य वर्चिनः । सहस्राणि शतावधीः । अधि पञ्च प्रधीँरिव ॥ १५ ॥
उत त्यं पुत्रमग्रुवः । परावृक्तं शतक्रतुः । उक्थेष्विन्द्र आभजत् ॥ १६ ॥
उत त्या तुर्वशायदू । अस्नातारा शचीपतिः । इन्द्रो विद्वाँ अपारयत् ॥ १७ ॥
15 उत त्या सद्य आर्या । सरयोरिन्द्र पारतः । अर्णाचित्ररथावधीः ॥ १८ ॥
अनु द्वा जहिता नयः । अन्धं श्रोणं च वृत्रहन् । न तत्ते सुम्नमष्टवे ॥ १९ ॥
शतमश्मन्मयीनाम् । पुरामिन्द्रो व्यास्यत् । दिवोदासाय दाशुषे ॥ २० ॥
अस्वापयद्दभीतये । सहस्रा त्रिंशतं हथैः । दासानामिन्द्रो मायया ॥ २१ ॥
स घेदुतासि वृत्रहन् । समान इन्द्र गोपतिः । यस्ता विश्वानि चिच्युषे ॥ २२ ॥
20 उत नूनं यदिन्द्रियम् । करिष्या इन्द्र पौंस्यम् । अद्या नकिष्टदा मिनत् ॥ २३ ॥

---

### 12. An die Ṛbhu (4,33).

प्र ऋभुभ्यो दूतमिव वाचमिष्ये । उपस्तिरे श्वैतरीं धेनुमीळे ।
ये वातजूतास्तरणिभिरेवैः । परि द्यां सद्यो अपसो बभूवुः ॥ १ ॥
यदारमक्रन्नृभवः पितृभ्याम् । परिविष्टी वेषणा दंसनाभिः ।
आदिद्देवानामुप सख्यमायन् । धीरासः पुष्टिमवहन्मनायै ॥ २ ॥
25 पुनर्ये चक्रुः पितरा युवाना । सना यूपेव जरणा शयाना ।
ते वाजो विभ्वाँ ऋभुरिन्द्रवन्तः । मधुप्सरसो नो अवन्तु यज्ञम् ॥ ३ ॥
यत्संवत्समृभवो गामरक्षन् । यत्संवत्समृभवो मा अपिंशन् ।
यत्संवत्समभरन्भासो अस्याः । ताभिः शमीभिरमृतत्वमाशुः ॥ ४ ॥
ज्येष्ठ आह चमसा द्वा करेति । कनीयान्त्रीन्कृणवामेति आह ।
30 कनिष्ठ आह चतुरस्करेति । त्वष्ट ऋभवस्तत्पनयद्वचो वः ॥ ५ ॥

सत्यमूचुर्नर एवा हि चक्रुः । अनु स्वधामृभवो जग्मुरेताम् ।
विभ्राजमानांश्चमसाँ अहेव । अवेनत्त्वष्टा चतुरो ददृश्वान् ॥ ६ ॥
द्वादश द्यून्यदगोह्यस्य । आतिथ्ये रणन्नृभवः ससन्तः ।
सुक्षेत्राकृण्वन्ननयन्त सिन्धून् । धन्वातिष्ठन्नोषधीर्निम्नमापः ॥ ७ ॥
5 रथं ये चक्रुः सुवृतं नरेष्ठाम् । ये धेनुं विश्वजुवं विश्वरूपाम् ।
त आ तक्षन्त्वृभवो रयिं नः । स्ववसः स्वपसः सुहस्ताः ॥ ८ ॥
अपो ह्येषामजुषन्त देवाः । अभि क्रत्वा मनसा दीध्यानाः ।
वाजो देवानामभवत्सुकर्मा । इन्द्रस्यर्भुक्षा वरुणस्य विभ्वा ॥ ९ ॥
ये हरी मेधयोक्था मदन्तः । इन्द्राय चक्रुः सुयुजा ये अश्वा ।
10 ते रायस्पोषं द्रविणान्यस्मे । धत्तर्भवः क्षेमयन्तो न मित्रम् ॥ १० ॥
इदाह्नः पीतिमुत वो मदं धुः । न ऋते श्रान्तस्य सख्याय देवाः ।
ते नूनमस्मे ऋभवो वसूनि । तृतीये अस्मिन्त्सवने दधात ॥ ११ ॥

---

## 13. An Savitar (5, 81).

युञ्जते मन उत युञ्जते धियः । विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इत् । मही देवस्य सवितुः परिष्टुतिः ॥ १ ॥
15 विश्वा रूपाणि प्रति मुञ्चते कविः । प्रासावीद्भद्रं द्विपदे चतुष्पदे ।
वि नाकमख्यत्सविता वरेण्यः । अनु प्रयाणमुषसो वि राजति ॥ २ ॥
यस्य प्रयाणमन्वन्य इद्ययुः । देवा देवस्य महिमानमोजसा ।
यः पार्थिवानि विममे स एतशः । रजांसि देवः सविता महित्वना ॥ ३ ॥
उत यासि सवितस्त्रीणि रोचना । उत सूर्यस्य रश्मिभिः समुच्यसि ।
20 उत रात्रीमुभयतः परीयसे । उत मित्रो भवसि देव धर्मभिः ॥ ४ ॥
उतेशिषे प्रसवस्य त्वमेक इत् । उत पूषा भवसि देव यामभिः ।
उतेदं विश्वं भुवनं वि राजसि । श्यावाश्वस्ते सवितः स्तोममानशे ॥ ५ ॥

---

## 14. An Pṛthivī (5, 84).

बळित्था पर्वतानाम् । खिद्रं बिभर्षि पृथिवि ।
प्र या भूमिं प्रवत्वति । मह्ना जिनोषि महिनि ॥ १ ॥
25 स्तोमासस्त्वा विचारिणि । प्रति ष्टोभन्त्यक्तुभिः ।
प्र या वाजं न हेषन्तम् । पेरुमस्यस्यर्जुनि ॥ २ ॥
दृळ्हा चिद्या वनस्पतीन् । क्ष्मया दर्धर्ष्योजसा ।
यत्ते अभ्रस्य विद्युतः । दिवो वर्षन्ति वृष्टयः ॥ ३ ॥

---

### 15. An Varuṇa (5, 85).

प्र सम्राजे बृहदर्चा गभीरम् । ब्रह्म प्रियं वरुणाय श्रुताय ।
वि यो जघान शमितेव चर्म । उपस्तिरे पृथिवीं सूर्याय ॥ १ ॥
वनेषु वि अन्तरिक्षं ततान । वाजमर्वत्सु पय उस्रियासु ।
हृत्सु क्रतुं वरुणो अप्सु अग्निम् । दिवि सूर्यमदधात्सोममद्रौ ॥ २ ॥
5 नीचीनबारं वरुणः कवन्धम् । प्र ससर्ज रोदसी अन्तरिक्षम् ।
तेन विश्वस्य भुवनस्य राजा । यवं न वृष्टिर्वि उनत्ति भूम ॥ ३ ॥
उनत्ति भूमिं पृथिवीमुत द्याम् । यदा दुग्धं वरुणो वष्टि आदित् ।
समभ्रेण वसत पर्वतासः । तविषीयन्तः श्रथयन्त वीराः ॥ ४ ॥
इमामू षु आसुरस्य श्रुतस्य । महीं मायां वरुणस्य प्र वोचम् ।
10 मानेनेव तस्थिवाँ अन्तरिक्षे । वि यो ममे पृथिवीं सूर्येण ॥ ५ ॥
इमामू नु कवितमस्य मायाम् । महीं देवस्य नकिरा दधर्ष ।
एकं यदुद्ना न पृणन्ति एनीः । आसिञ्चन्तीरवनयः समुद्रम् ॥ ६ ॥
अर्यमियं वरुण मित्रियं वा । सखायं वा सदमिद्भ्रातरं वा ।
वेशं वा नित्यं वरुणारणं वा । यत्सीमागश्चकृमा शिश्रथस्तत् ॥ ७ ॥
15 कितवासो यद्रिरिपुर्न दीवि । यद्वा घा सत्यमुत यन्न विद्म ।
सर्वा ता वि ष्य शिथिरेव देव । अधा ते स्याम वरुण प्रियासः ॥ ८ ॥

---

### 16. An Agni Vaiçvānara (6, 9).

अहश्च कृष्णमहरर्जुनं च । वि वर्तेते रजसी वेद्याभिः ।
वैश्वानरो जायमानो न राजा । अवातिरज्ज्योतिषाग्निस्तमांसि ॥ १ ॥
नाहं तन्तुं न वि जानामि ओतुम् । न यं वयन्ति समरे अतमानाः ।
20 कस्य स्वित्पुत्र इह वक्त्वानि । परो वदाति अवरेण पित्रा ॥ २ ॥
स इत्तन्तुं स वि जानाति ओतुम् । स वक्त्वानि ऋतुथा वदाति ।
य ईं चिकेतदमृतस्य गोपाः । अवश्चरन्परो अन्येन पश्यन् ॥ ३ ॥
वि मे कर्णा पतयतो वि चक्षुः । वीदं ज्योतिर्हृदय आहितं यत् ।
वि मे मनश्चरति दूरआधीः । किं स्विद्वक्ष्यामि किमु नू मनिष्ये ॥ ६ ॥
25 अयं होता प्रथमः पश्यतेमम् । इदं ज्योतिरमृतं मर्त्येषु ।
अयं स जज्ञे ध्रुव आ निषत्तः । अमर्त्यस्तन्वा वर्धमानः ॥ ४ ॥
ध्रुवं ज्योतिर्निहितं दृशये कम् । मनो जविष्ठं पतयत्सु अन्तः ।
विश्वे देवाः समनसः सकेताः । एकं क्रतुमभि वि यन्ति साधु ॥ ५ ॥

विश्वे देवा अनमस्यन्भियानाः । त्वामग्ने तमसि तस्थिवांसम् ।
वैश्वानरो ऽवतु ऊतये नः । अमर्त्यो ऽवतु ऊतये नः ॥ ७ ॥

---

17. An die Viçve Devâḥ (6,50).

हुवे वो देवीमदितिं नमोभिः । मृळीकाय वरुणं मित्रमग्निम् ।
अभिक्षदामर्यमणं सुशेवम् । त्रातॄन्देवान्सवितारं भगं च ॥ १ ॥
5 सुज्योतिषः सूर्य दक्षपितॄन् । अनागास्त्वे सुमहो वीहि देवान् ।
द्विजन्मानो य ऋतसापः सत्याः । स्वर्वन्तो यजता अग्निजिह्वाः ॥ २ ॥
उत द्यावा पृथिवी क्षत्रमुरु । बृहद्रोदसी शरणं सुषुम्ने ।
महस्करथो वरिवो यथा नः । अस्मे क्षयाय धिषणे अनेहः ॥ ३ ॥
आ नो रुद्रस्य सूनवो नमन्ताम् । अद्या हूतासो वसवो अधृष्टाः ।
10 यदीमर्भे महति वा हितासः । बाधे मरुतो अह्वाम देवान् ॥ ४ ॥
मिम्यक्ष येषु रोदसी नु देवी । सिषक्ति पूषा अभ्यर्धयज्वा ।
श्रुत्वा हवं मरुतो यद्ध याथ । भूमा रेजन्ते अध्वनि प्रविक्ते ॥ ५ ॥
अभि त्यं वीरं गिर्वणसमर्च । इन्द्रं ब्रह्मणा जरितर्नवेन ।
श्रवदिद्धवमुप च स्तवानः । रासद्वाजाँ उप महो गृणानः ॥ ६ ॥
15 ओमानमापो मानुषीरमृक्तम् । धात तोकाय तनयाय शं योः ।
यूयं हि ष्ठा भिषजो मातृतमाः । विश्वस्य स्थातुर्जगतो जनित्रीः ॥ ७ ॥
आ नो देवः सविता त्रायमाणः । हिरण्यपाणिर्यजतो जगम्यात् ।
यो दत्रवाँ उषसो न प्रतीकम् । विऊर्णुते दाशुषे वार्याणि ॥ ८ ॥
उत त्वं सूनो सहसो नो अद्य । आ देवाँ अस्मिन्नध्वरे ववृत्याः ।
20 स्यामहं ते सदमिद्रातौ । तव स्यामग्ने अवसा सुवीरः ॥ ९ ॥
उत त्या मे हवमा जग्म्यातम् । नासत्या धीभिर्युवमङ्ग विप्रा ।
अत्रिं न महस्तमसो ऽमुमुक्तम् । तूर्वतं नरा दुरितादभीके ॥ १० ॥
ते नो रायो द्युमतो वाजवतः । दातारो भूत नृवतः पुरुक्षोः ।
दशस्यन्तो दिव्याः पार्थिवासः । गोजाता अप्या मृळता च देवाः ॥ ११ ॥

---

18. An Soma und Rudra (6,74).

25 सोमा रुद्रा धारयेथामसुर्यम् । प्र वामिष्टयो ऽरमश्नुवन्तु ।
दमे दमे सप्त रत्ना दधाना । शं नो भूतं द्विपदे शं चतुष्पदे ॥ १ ॥
सोमा रुद्रा वि वृहतं विषूचीम् । अमीवा या नो गयमाविवेश ।
आरे बाधेथां निर्ऋतिं पराचैः । अस्मे भद्रा सौश्रवसानि सन्तु ॥ २ ॥

सोमा रुद्रा युवमेतानि अस्मे । विश्वा तनूषु भेषजानि धत्तम् ।
अव स्यतं मुञ्चतं यन्नो अस्ति । तनूषु बद्धं कृतमेनो अस्मत् ॥ ३ ॥
तिग्मायुधौ तिग्महेती सुशेवौ । सोमा रुद्राविह सु मृळतं नः ।
प्र नो मुञ्चतं वरुणस्य पाशात् । गोपायतं नः सुमनस्यमाना ॥ ४ ॥

---

### 19. An Indra (7, 28).

5 ब्रह्मा ण इन्द्र उप याहि विद्वान् । अर्वाञ्चस्ते हरयो सन्तु युक्ताः ।
विश्वे चिद्धि त्वा विहवन्त मर्ताः । अस्माकमिच्छृणुहि विश्वमिन्व ॥ १ ॥
हवं त इन्द्र महिमा वि आनट् । ब्रह्म यत्पासि शवसिन्नृषीणाम् ।
आ यद्वज्रं दधिषे हस्त उग्र । घोरः सन्क्रत्वा जनिष्ठा अषाळ्हः ॥ २ ॥
तव प्रणीती इन्द्र जोहुवानान् । सं यन्नॄन्न रोदसी निनेथ ।
10 महे क्षत्राय शवसे हि जज्ञे । अतूतुजिं चित्तूतुजिरशिश्नत् ॥ ३ ॥
एभिर्न इन्द्र अहभिर्दशस्य । दुर्मित्रासो हि क्षितयः पवन्ते ।
प्रति यच्चष्टे अनृतमनेनाः । अव द्विता वरुणो मायी नः सात् ॥ ४ ॥
वोचेमेदिन्द्रं मघवानमेनम् । महो रायो राधसो यद्ददन्नः ।
यो अर्चतो ब्रह्मकृतिमविष्ठः । यूयं पात सुअस्तिभिः सदा नः ॥ ५ ॥

---

### 20. An Rudra (7, 46).

15 इमा रुद्राय स्थिरधन्वने गिरः । क्षिप्रेषवे देवाय स्वधावने ।
अषाळ्हाय सहमानाय वेधसे । तिग्मायुधाय भरता शृणोतु नः ॥ १ ॥
स हि क्षयेण क्षमिअस्य जन्मनः । साम्राजिएन दिविअस्य चेतति ।
अवन्नवन्तीरुप नो दुरश्चर । अनमीवो रुद्र जासु नो भव ॥ २ ॥
या ते दिद्युदवसृष्टा दिवस्परि । क्ष्मया चरति परि सा वृणक्तु नः ।
20 सहस्रं ते सुअपिवात भेषजा । मा नस्तोकेषु तनयेषु रीरिषः ॥ ३ ॥
मा नो वधी रुद्र मा परा दाः । मा ते भूम प्रसितौ हीळितस्य ।
आ नो भज बर्हिषि जीवशंसे । यूयं पात सुअस्तिभिः सदा नः ॥ ४ ॥

---

### 21. An die Gewässer (7, 49).

समुद्रज्येष्ठाः सलिलस्य मध्यात् । पुनाना यन्ति अनिविशमानाः ।
इन्द्रो या वज्री वृषभो रराद । ता आपो देवीरिह मामवन्तु ॥ १ ॥
25 या आपो दिव्या उत वा स्रवन्ति । खनित्रिमा उत वा याः स्वयंजाः ।
समुद्रार्था याः शुचयः पावकाः । ता आपो देवीरिह मामवन्तु ॥ २ ॥

यासां राजा वरुणो याति मध्ये । सत्यानृते अवपश्यञ्जनानाम् ।
मधुश्चुतः शुचयो याः पावकाः । ता आपो देवीरिह मामवन्तु ॥ ३ ॥
यासु राजा वरुणो यासु सोमः । विश्वे देवा यासु ऊर्जं मदन्ति ।
वैश्वानरो यासु अग्निः प्रविष्टः । ता आपो देवीरिह मामवन्तु ॥ ४ ॥

### 22. An Vâstoshpati (7, 54).

5 वास्तोष्पते प्रति जानीहि अस्मान् । सुआवेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व । शं नो भव द्विपदे शं चतुष्पदे ॥ १ ॥
वास्तोष्पते प्रतरणो न एधि । गयस्फानो गोभिरश्वेभिरिन्दो ।
अजरासस्ते सखिये सियाम । पितेव पुत्रान्प्रति नो जुषस्व ॥ २ ॥
वास्तोष्पते शग्मया संसदा ते । सक्षीमहि रण्वया गातुमत्या ।
10 पाहि क्षेम उत योगे वरं नः । यूयं पात सुअस्तिभिः सदा नः ॥ ३ ॥

### 23. An die Marut (7, 57).

मध्वो वो नाम मारुतं यजत्राः । प्र यज्ञेषु शवसा मदन्ति ।
ये रेजयन्ति रोदसी चिदुर्वी । पिन्वन्ति उत्सं यदयासुरुग्राः ॥ १ ॥
निचेतारो हि मरुतो गृणन्तम् । प्रणेतारो यजमानस्य मन्म ।
अस्माकमद्य विदथेषु बर्हिः । आ वीतये सदत पिप्रियाणाः ॥ २ ॥
15 नैतावदन्ये मरुतो यथेमे । भ्राजन्ते रुक्मैरायुधैस्तनूभिः ।
आ रोदसी विश्वपिशः पिशानाः । समानमञ्जि अञ्जते शुभे कम् ॥ ३ ॥
ऋधक्सा वो मरुतो दिद्युदस्तु । यद्व आगः पुरुषता कराम ।
मा वस्तस्यामपि भूमा यजत्राः । अस्मे वो अस्तु सुमतिश्चनिष्ठा ॥ ४ ॥
कृते चिदत्र मरुतो रणन्त । अनवद्यासः शुचयः पावकाः ।
20 प्र णोऽवत सुमतिभिर्यजत्राः । प्र वाजेभिस्तिरत पुष्यसे नः ॥ ५ ॥
उत स्तुतासो मरुतो विअन्तु । विश्वेभिर्नामभिर्नरो हवींषि ।
ददात नो अमृतस्य प्रजायै । जिगृत रायः सूनृता मघानि ॥ ६ ॥
आ स्तुतासो मरुतो विश्व ऊती । अच्छा सूरीन्त्सर्वताता जिगात ।
ये नस्त्मना शतिनो वर्धयन्ति । यूयं पात सुअस्तिभिः सदा नः ॥ ७ ॥

### 24. An Mitra und Varuṇa (7, 61).

25 उद्वां चक्षुर्वरुणा सुप्रतीकम् । देवयोरेति सूरिअस्ततन्वान् ।
अभि यो विश्वा भुवनानि चष्टे । स मन्युं मर्तिएषु आ चिकेत ॥ १ ॥
प्र वां स मित्रा वरुणावृतावा । विप्रो मन्मानि दीर्घश्रुदियर्ति ।
यस्य ब्रह्माणि सुक्रतू अवाथः । आ यत्क्रत्वा न शरदः पृणैथे ॥ २ ॥

प्र उरोर्मित्रा वरुणा पृथिव्याः । प्र दिव ऋष्वाद्बृहतः सुदानू ।
स्पशो दधाथे ओषधीषु विक्षु । ऋधग्यतो अनिमिषं रक्षमाणा ॥ ३ ॥
अमूरा विश्वा वृषणाविमा वाम् । न यासु चित्रं ददृशे न यक्षम् ।
द्रुहः सचन्ते अनृता जनानाम् । न वां निण्यान्यचिते अभूवन् ॥ ५ ॥
5 शंसा मित्रस्य वरुणस्य धाम । शुष्मो रोदसी बद्बधे महित्वा ।
अयन्मासा अयज्वनामवीराः । प्र यज्ञमन्मा वृजनं तिराते ॥ ४ ॥
सम् उ वां यज्ञं महयं नमोभिः । हुवे वां मित्रा वरुणा सबाधः ।
प्र वां मन्मान्यृचसे नवानि । कृतानि ब्रह्म जुजुषन्निमानि ॥ ६ ॥

---

25. An die Morgenröthe (7, 76).

उदु ज्योतिरमृतं विश्वजन्यम् । विश्वानरः सविता देवो अश्रेत् ।
10 क्रत्वा देवानामजनिष्ट चक्षुः । आविरकर्भुवनं विश्वमुषाः ॥ १ ॥
प्र मे पन्था देवयाना अदृश्रन् । अमर्धन्तो वसुभिरिष्कृतासः ।
अभूदु केतुरुषसः पुरस्तात् । प्रतीची आगादधि हर्म्येभ्यः ॥ २ ॥
तानीदहानि बहुलानि आसन् । या प्राचीनमुदिता सूर्यस्य ।
यतः परि जार इवाचरन्ती । उषो ददृक्षे न पुनर्यतीव ॥ ३ ॥
15 त इद्देवानां सधमाद आसन् । ऋतावानः कवयः पूर्व्यासः ।
गूळ्हं ज्योतिः पितरो अन्वविन्दन् । सत्यमन्त्रा अजनयन्नुषासम् ॥ ४ ॥
समान ऊर्वे अधि संगतासः । सं जानते न यतन्ते मिथस्ते ।
ते देवानां न मिनन्ति व्रतानि । अमर्धन्तो वसुभिर्यादमानाः ॥ ५ ॥
प्रति त्वा स्तोमैरीळते वसिष्ठाः । उषर्बुधः सुभगे तुष्टुवांसः ।
20 गवां नेत्री वाजपत्नी न उच्छ । उषः सुजाते प्रथमा जरस्व ॥ ६ ॥
एषा नेत्री राधसः सूनृतानाम् । उषा उच्छन्ती रिभ्यते वसिष्ठैः ।
दीर्घश्रुतं रयिमस्मे दधाना । यूयं पात स्वस्तिभिः सदा नः ॥ ७ ॥

---

26. An Indra und Varuṇa (7, 83).

युवां नरा पश्यमानास आप्यम् । प्राचा गव्यन्तः पृथुपर्शवो ययुः ।
दासा च वृत्रा हतमार्याणि च । सुदासमिन्द्रा वरुणावसावतम् ॥ १ ॥
25 यत्रा नरः समयन्ते कृतध्वजः । यस्मिन्नाजा भवति किं चन प्रियम् ।
यत्रा भयन्ते भुवना सुअर्दृशः । तत्रा न इन्द्रा वरुणाधि वोचतम् ॥ २ ॥
सं भूम्या अन्ता ध्वसिरा अदृक्षत । इन्द्रा वरुणा दिवि घोष आरुहत् ।
अस्थुर्जनानामुप मामरातयः । अर्वागवसा हवनश्रुता गतम् ॥ ३ ॥

इन्द्रा वरुणा वधनाभिरप्रति । भेदं वन्वन्ता प्र सुदासमावतम् ।
ब्रह्माणि एषां शृणुतं हवीमनि । सत्या तृत्सूनामभवत्पुरोहितिः ॥ ४ ॥
इन्द्रा वरुणावभि आ तपन्ति मा । अघानि अर्यो वनुषामरातयः ।
युवं हि वस्व उभयस्य राजथः । अध स्मा नो अवतं पार्ये दिवि ॥ ५ ॥
5 युवां हवन्त उभयास आजिषु । इन्द्रं च वस्वो वरुणं च सातये ।
यत्र राजभिर्दशभिर्निबाधितम् । प्र सुदासमावतं तृत्सुभिः सह ॥ ६ ॥
दश राजानः समिता अयज्यवः । सुदासमिन्द्रा वरुणा न युयुधुः ।
सत्या नृणामद्मसदामुपस्तुतिः । देवा एषामभवन्देवहूतिषु ॥ ७ ॥
दाशराज्ञे परियत्ताय विश्वतः । सुदास इन्द्रा वरुणावशिक्षतम् ।
10 श्वित्यञ्चो यत्र नमसा कपर्दिनः । धिया धीवन्तो असपन्त तृत्सवः ॥ ८ ॥
वृत्राणि अन्यः समिथेषु जिघ्नते । व्रतानि अन्यो अभि रक्षते सदा ।
हवामहे वां वृषणा सुवृक्तिभिः । अस्मे इन्द्रा वरुणा शर्म यच्छतम् ॥ ९ ॥
अस्मे इन्द्रो वरुणो मित्रो अर्यमा । द्युम्नं यच्छन्तु महि शर्म सप्रथः ।
अवध्रं ज्योतिरदितेर्ऋतावृधः । देवस्य श्लोकं सवितुर्मनामहे ॥ १० ॥

---

### 27. An Parǵanja (7, 102).

15 पर्जन्याय प्र गायत । दिवस्पुत्राय मीळ्हुषे । स नो यवसमिच्छतु ॥ १ ॥
यो गर्भमोषधीनाम् । गवां कृणोति अर्वताम् । पर्जन्यः पुरुषीणाम् ॥ २ ॥
तस्मा इदास्ये हविः । जुहोता मधुमत्तमम् । इळा नः संयतं करत् ॥ ३ ॥

---

### 28. An die Frösche (7, 103).

संवत्सरं शशयानाः । ब्राह्मणा व्रतचारिणः ।
वाचं पर्जन्यजिन्विताम् । प्र मण्डूका अवादिषुः ॥ १ ॥
20 दिव्या आपो अभि यदेनमायन् । दृतिं न शुष्कं सरसी शयानम् ।
गवामह न मायुर्वत्सिनीनाम् । मण्डूकानां वग्नुरत्रा समेति ॥ २ ॥
यदीमेनाँ उशतो अभ्यवर्षीत् । तृष्यावतः प्रावृषि आगतायाम् ।
अख्खलीकृत्या पितरं न पुत्रः । अन्यो अन्यमुप वदन्तमेति ॥ ३ ॥
अन्यो अन्यमनु गृभ्णाति एनोः । अपां प्रसर्गे यदमन्दिषाताम् ।
25 मण्डूको यदभिवृष्टः कनिष्कन् । पृश्निः संपृङ्क्ते हरितेन वाचम् ॥ ४ ॥
यदेषामन्यो अन्यस्य वाचम् । शाक्तस्येव वदति शिक्षमाणः ।
सर्वं तदेषां समृधेव पर्व । यत्सुवाचो वदथनाधि अप्सु ॥ ५ ॥
गोमायुरेको अजमायुरेकः । पृश्निरेको हरित एक एषाम् ।
समानं नाम बिभ्रतो विरूपाः । पुरुत्रा वाचं पिपिशुर्वदन्तः ॥ ६ ॥

ब्राह्मणासो अतिरात्रे न सोमे। सरो न पूर्णमभितो वदन्तः।
संवत्सरस्य तदहः परि ष्ठ। यन्मण्डूकाः प्रावृषीणं बभूव॥ ७॥
ब्राह्मणासः सोमिनो वाचमक्रत। ब्रह्म कृण्वन्तः परिवत्सरीणम्।
अध्वर्यवो घर्मिणः सिष्विदानाः। आविर्भवन्ति गुह्या न के चित्॥ ८॥
5 देवहितिं जुगुपुर्द्वादशस्य। ऋतुं नरो न प्र मिनन्ति एते।
संवत्सरे प्रावृषि आगतायाम्। तप्ता घर्मा अश्नुवते विसर्गम्॥ ९॥
गोमायुरदादजमायुरदात्। पृश्निरदाद्धरितो नो वसूनि।
गवां मण्डूका ददतः शतानि। सहस्रसावे प्र तिरन्त आयुः॥ १०॥

---

### 29. An die Viçve Devâḥ (8,30).

नहि वो अस्ति अर्भकः। देवासो न कुमारकः। विश्वे सतोमहान्त इत्॥ १॥
10 इति स्तुतासो असथा रिशादसः। ये स्थ त्रयश्च त्रिंशच्च।
मनोर्देवा यज्ञियासः॥ २॥
ते नस्त्राध्वं ते अवत। त उ नो अधि वोचत।
मा नः पथः पित्र्यान्मानवादधि। दूरं नैष्ट परावतः॥ ३॥
ये देवास इह स्थन। विश्वे वैश्वानरा उत।
15 अस्मभ्यं शर्म सप्रथः। गवे अश्वाय यच्छत॥ ४॥

---

### 30. Gespräch zwischen Varuṇa und Agni (10,51).

Varuṇa:

महत्तदुल्बं स्थविरं तदासीत्। येनाविष्टितः प्रविवेशिथापः।
विश्वा अपश्यद्बहुधा ते अग्ने। जातवेदस्तन्वो देव एकः॥ १॥

Agni:

को मा ददर्श कतमः स देवः। यो मे तन्वो बहुधा पर्यपश्यत्।
क्वाह मित्रा वरुणा क्षियन्ति। अग्नेर्विश्वाः समिधो देवयानीः॥ २॥

Varuṇa:

20 ऐच्छाम त्वा बहुधा जातवेदः। प्रविष्टमग्ने अप्सु ओषधीषु।
तं त्वा यमो अचिकेच्चित्रभानो। दशान्तरुष्यादतिरोचमानम्॥ ३॥

Agni:

होत्रादहं वरुण बिभ्यदायम्। नेदेव मा युनजन्नत्र देवाः।
तस्य मे तन्वो बहुधा निविष्टाः। एतमर्थं न चिकेताहमग्निः॥ ४॥

Varuṇa:

एहि मनुर्देवयुर्यज्ञकामः । अरंकृत्या तमसि क्षेषि अग्ने ।
सुगान्पथः कृणुहि देवयानान् । वह हव्यानि सुमनस्यमानः ॥ ५ ॥

Agni:

अग्नेः पूर्वे भ्रातरो अर्थमेतम् । रथीवाध्वानमन्वावरीवुः ।
तस्माद्भिया वरुण दूरमायम् । गौरो न क्षेप्नोरविजे ज्यायाः ॥ ६ ॥

Varuṇa:

5 कुर्मस्त आयुरजरं यदग्ने । यथा युक्तो जातवेदो न रिष्याः ।
अथा वहासि सुमनस्यमानः । भागं देवेभ्यो हविषः सुजात ॥ ७ ॥

Agni:

प्रयाजान्मे अनुयाजांश्च केवलान् । ऊर्जस्वन्तं हविषो दत्त भागम् ।
घृतं चापां पुरुषं चौषधीनाम् । अग्नेश्च दीर्घमायुरस्तु देवाः ॥ ८ ॥

Varuṇa:

तव प्रयाजा अनुयाजाश्च केवले । ऊर्जस्वन्तो हविषः सन्तु भागाः ।
10 तवाग्ने यज्ञो अयमस्तु सर्वः । तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥ ९ ॥

---

31. Die Fahrt der Saramâ zu den Paṇi (10,108).

Die Paṇi:

किमिच्छन्ती सरमा प्रेदमानट् । दूरे ह्यध्वा जगुरिः पराचैः ।
कास्मेहितिः का परितक्म्यासीत् । कथं रसाया अतरः पयांसि ॥ १ ॥

Saramâ:

इन्द्रस्य दूतीरिषिता चरामि । मह इच्छन्ती पणयो निधीन्वः ।
अतिष्कदो भियसा तन्न आवत् । तथा रसाया अतरं पयांसि ॥ २ ॥

Die Paṇi:

15 कीदृङ्ङिन्द्रः सरमे का दृशीका । यस्येदं दूतीरसरः पराकात् ।
आ च गच्छान्मित्रमेना दधाम । अथा गवां गोपतिर्नो भवाति ॥ ३ ॥

Saramâ:

नाहं तं वेद दभ्यं दभत्सः । यस्येदं दूतीरसरं पराकात् ।
न तं गूहन्ति स्रवतो गभीराः । हता इन्द्रेण पणयः शयध्वे ॥ ४ ॥

Die Paṇi:

इमा गावः सरमे या ऐच्छः । परि दिवो अन्तान्सुभगे पतन्ती ।
20 कस्त एना अव सृजादयुधी । उतास्माकमायुधा सन्ति तिग्मा ॥ ५ ॥

Saramâ:

असेनिआ वः पणयो वचांसि । अनिषव्यास्तनुअः सन्तु पापीः ।
अधृष्टो व एतवा अस्तु पन्थाः । बृहस्पतिर्व उभया न मृळात् ॥ ६ ॥

Die Paṇi:

अयं निधिः सरमे अद्रिबुध्नः । गोभिरश्वेभिर्वसुभिर्न्यृष्टः ।
रक्षन्ति तं पणयो ये सुगोपाः । रेकु पदमलकमा जगन्थ ॥ ७ ॥

Saramâ:

5 एह गमन्नृषयः सोमशिताः । अयासिओ अङ्गिरसो नवग्वाः ।
त एतमूर्वं वि भजन्त गोनाम् । अथैतद्वचः पणयो वमन्नित् ॥ ८ ॥

Die Paṇi:

एवा च त्वं सरम आजगन्थ । प्रबाधिता सहसा दैविएन ।
स्वसारं त्वा कृणवै मा पुनर्गाः । अप ते गवां सुभगे भजाम ॥ ९ ॥

Saramâ:

नाहं वेद भ्रातृत्वं नो स्वसृत्वम् । इन्द्रो विदुरङ्गिरसश्च घोराः ।
10 गोकामा मे अच्छदयन्यदायम् । अपात इत पणयो वरीयः ॥ १० ॥

Der Sänger:

दूरमित पणयो वरीयः । उद्गावो यन्तु मिनतीर्ऋतेन ।
बृहस्पतिर्या अविन्दन्निगूळ्हाः । सोमो ग्रावाण ऋषयश्च विप्राः ॥ ११ ॥

---

32. Die Pflicht des Wohlthuns (10,117).

न वा उ देवाः क्षुधमिद्वधं ददुः । उताशितमुप गच्छन्ति मृत्यवः ।
उतो रयिः पृणतो नोप दस्यति । उतापृणन्मर्डितारं न विन्दते ॥ १ ॥
15 य आध्राय चकमानाय पित्वः । अन्नवान्त्सन्रफितायोपजग्मुषे ।
स्थिरं मनः कृणुते सेवते पुरा । उतो चित्स मर्डितारं न विन्दते ॥ २ ॥
स इद्भोजो यो गृहवे ददाति । अन्नकामाय चरते कृशाय ।
अरमस्मै भवति यामहूतौ । उतापरीषु कृणुते सखायम् ॥ ३ ॥
न स सखा यो न ददाति सख्ये । सचाभुवे सचमानाय पित्वः ।
20 अपास्मात्प्रेयान्न तदोको अस्ति । पृणन्तमन्यमरणं चिदिच्छेत् ॥ ४ ॥
पृणीयादिन्नाधमानाय तव्यान् । द्राघीयांसमनु पश्येत पन्थाम् ।
ओ हि वर्तन्ते रथिएव चक्रा । अन्यमन्यमुप तिष्ठन्त रायः ॥ ५ ॥
मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्स तस्य ।
नार्यमणं पुष्यति नो सखायम् । केवलाघो भवति केवलादी ॥ ६ ॥

---

### 33. Selbstgespräch des betrunkenen Indra (10,119).

प्र वाता इव दोधतः । उन्मा पीता अयंसत । कुवित्सोमस्यापामिति ॥ २ ॥
उन्मा पीता अयंसत । रथमश्वा इवाशवः । कु० ॥ ३ ॥
उप मा मतिरस्थित । वाश्रा पुत्रमिव प्रियम् । कु० ॥ ४ ॥
अहं तष्टेव वन्धुरम् । पर्यचामि हृदा मतिम् । कु० ॥ ५ ॥
5 इति वा इति मे मनः । गामश्वं सनुयामिति । कु० ॥ १ ॥
नहि मे अक्षिपच्चन । अच्छान्त्सुः पञ्च कृष्टयः । कु० ॥ ६ ॥
नहि मे रोदसी उभे । अन्यं पक्षं चन प्रति । कु० ॥ ७ ॥
अभि द्यां महिना भुवम् । अभीमां पृथिवीं महीम् । कु० ॥ ८ ॥
हन्ताहं पृथिवीमिमाम् । नि दधानीह वेह वा । कु० ॥ ९ ॥
10 ओषमित्पृथिवीमहम् । जङ्घनानीह वेह वा । कु० ॥ १० ॥
दिवि मे अन्यः पक्षः । अधो अन्यमचीकृषम् । कु० ॥ ११ ॥
अहमस्मि महामहः । अभिनभ्यमुदीषितः । कु० ॥ १२ ॥
गृहो यामि अरंकृतः । देवेभ्यो हव्यवाहनः । कु० ॥ १३ ॥

### 34. Der Anfang der Dinge (10,129).

नासदासीन्नो सदासीत्तदानीम् । नासीद्रजो नो व्योमा परो यत् ।
15 किमावरीवः कुह कस्य शर्मन् । अम्भः किमासीद्गहनं गभीरम् ॥ १ ॥
न मृत्युरासीदमृतं न तर्हि । न रात्र्या अह्न आसीत्प्रकेतः ।
आनीदवातं स्वधया तदेकम् । तस्माद्धान्यन्न परः किं चनास ॥ २ ॥
तम आसीत्तमसा गूळ्हमग्रे । अप्रकेतं सलिलं सर्वमा इदम् ।
तुच्छ्येनाभ्वपिहितं यदासीत् । तपसस्तन्महिनाजायतैकम् ॥ ३ ॥
20 कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषा ॥ ४ ॥
तिरश्चीनो विततो रश्मिरेषाम् । अधः स्विदासी३दुपरि स्विदासी३त् ।
रेतोधा आसन्महिमान आसन् । स्वधा अवस्तात्प्रयतिः परस्तात् ॥ ५ ॥
को अद्धा वेद क इह प्र वोचत् । कुत आजाता कुत इयं विसृष्टिः ।
25 अर्वाग्देवा अस्य विसर्जनेन । अथा को वेद यत आबभूव ॥ ६ ॥
इयं विसृष्टिर्यत आबभूव । यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन् । सो अङ्ग वेद यदि वा न वेद ॥ ७ ॥

### 35. An Araṇjânî (10,146).

अरण्यानि अरण्यानि । असौ या प्रेव नश्यसि ।
कथा ग्रामं न पृच्छसि । न त्वा भीरिव विन्दती३ ॥ १ ॥

वृषारवाय वदते । यदुपावति चिच्चिकः ।
आघाटिभिरिव धावयन् । अरण्यानिर्महीयते ॥ २ ॥
उत गाव इवादन्ति । उत वेश्मेव दृश्यते ।
उतो अरण्यानिः सायम् । शकटीरिव सर्जति ॥ ३ ॥
5 गामङ्गैष आ ह्वयति । दार्वङ्गैषो अपावधीत् ।
वसन्नरण्यान्यां सायम् । अक्रुक्षदिति मन्यते ॥ ४ ॥
न वा अरण्यानिर्हन्ति । अन्यश्चेन्नाभिगच्छति ।
स्वादोः फलस्य जग्ध्वाय । यथाकामं नि पद्यते ॥ ५ ॥
आञ्जनगन्धिं सुरभिम् । बह्वन्नामकृषीवलाम् ।
10 प्राहं मृगाणां मातरम् । अरण्यानिमशंसिषम् ॥ ६ ॥

---

### 36. An die Âditja (10,185).

महि त्रीणामवो अस्तु । द्युक्षं मित्रस्य अर्यम्णः । दुराधर्षं वरुणस्य ॥ १ ॥
नहि तेषाममा चन । न अध्वसु वारणेषु । ईशे रिपुरघशंसः ॥ २ ॥
यस्मै पुत्रासो अदितेः । प्र जीवसे मर्त्याय । ज्योतिर्यच्छन्ति अजस्रम् ॥ ३ ॥

---

## II. Aitarejabrâhmaṇa.

### 1. Schöpfung der drei Vjâhṛti (5, 32).

प्रजापतिरकामयत । प्र जायेय । भूयान्त्स्यामिति । स तपोऽतप्यत । स तपस्तप्त्वेमाँ-
15 ल्लोकानसृजत पृथिवीमन्तरिक्षं दिवम् । ताँल्लोकानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रीणि
ज्योतींष्यजायन्त । अग्निरेव पृथिव्या अजायत । वायुरन्तरिक्षात् । आदित्यो दिवः । तानि
ज्योतींष्यभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयो वेदा अजायन्त । ऋग्वेद एवाग्नेरजायत । यजुर्वेदो
वायोः । सामवेद आदित्यात् । तान्वेदानभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रीणि शुक्राण्यजा-
यन्त । भूरित्येव ऋग्वेदादजायत । भुव इति यजुर्वेदात् । स्वरिति सामवेदात् । तानि शुक्रा-
20 ण्यभ्यतपत् । तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्त । अकार उकारो मकार इति । ताने-
कधा समभरत् । तदेतदो३मिति । तस्मादोमोमिति प्र णौति । ओमिति वै स्वर्गो लोकः ।
ओमित्यसौ योऽसौ तपति ।

स प्रजापतिर्यज्ञमतनुत । तमाहरत् । तेनायजत । स ऋचैव हौत्रमकरोत् । यजुषाध्वर्य-
वम् । साम्नोद्गीथम् । यदेतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकरोत् । स प्रजापतिर्यज्ञं देवेभ्यः
25 संप्रायच्छत् । ते देवा यज्ञमतन्वत । तमाहरन् । तेनायजन्त । त ऋचैव हौत्रमकुर्वन् । यजु-

षाध्वर्यवम् । साम्नोद्गीथम् । यदेवैतत्त्रय्यै विद्यायै शुक्रं तेन ब्रह्मत्वमकुर्वन् । ते देवा अब्रुव-
न्प्रजापतिम् । यदि नो यज्ञ ऋक्त आर्तिः स्यात् । यदि यजुष्टः । यदि सामतः । यद्यविज्ञाता
सर्वव्यापद्वा । का प्रायश्चित्तिरिति । स प्रजापतिरब्रवीद्देवान् । यदि वो यज्ञ ऋक्त आर्ति-
र्भवति भूरिति गार्हपत्ये जुहवाथ । यदि यजुष्टो भुव इत्याग्नीध्रीये ऽन्वाहार्यपचने वा
5 हविर्यज्ञेषु । यदि सामतः स्वरित्याहवनीये । यद्यविज्ञाता सर्वव्यापद्वा भूर्भुवः स्वरिति
सर्वा अनुद्रुत्याहवनीय एव जुहवाथेति । एतानि ह वै वेदानामन्तःश्लेषणानि यदेता व्या-
हृतयः । तद्यथात्मनात्मानं संदध्यात् । यथा पर्वणा पर्व यथा श्लेष्मणा चर्मण्यं वान्यद्वा
विश्लिष्टं संश्लेषयेत् । एवमेवैताभिर्यज्ञस्य विश्लिष्टं सं दधाति । सैषा सर्वप्रायश्चित्तिर्यदेता
व्याहृतयः । तस्मादेषैव यज्ञे प्रायश्चित्तिः कर्तव्या ।

---

### 2. Vom Schlangendämon Arbuda (6, 1).

10 देवा ह वै सर्वचरौ सत्त्रं नि षेदुः । ते ह पाप्मानं नाप जघ्निरे । तान्होवाचार्बुदः का-
द्रवेयः सर्प ऋषिर्मन्त्रकृत् । एका वै वो होत्राकृता । तां वो ऽहं करवाणि । अथ पाप्मान-
मप हनिष्यथ इति । ते ह तथेत्यूचुः । तेषां ह स्म स मध्यंदिने मध्यंदिन एवोपोदासर्पन्ग्रा-
व्णो ऽभि ष्टौति । तस्मान्मध्यंदिने मध्यंदिन एव ग्राव्णो ऽभि ष्टुवन्ति तदनुकृति । स ह स्म
येनोपोदासर्पत्तद्धाप्येतर्ह्यर्बुदोदासर्पणी नाम प्रपदस्ति । तान्ह राजा मदयां चकार । ते
15 होचुः । आशीविषो वै नो राजानमवेक्षते । हन्तास्योष्णीषेणाक्ष्यावपि नह्यामेति । तथेति ।
तस्य होष्णीषेणाक्ष्यावपि नेहुः । तस्मादुष्णीषमेव पर्यस्य ग्राव्णो ऽभि ष्टुवन्ति तदनुकृति ।
तान्ह राजा मदयामेव चकार । ते होचुः । स्वेन वै नो मन्त्रेण ग्राव्णो ऽभि ष्टौतीति । ह-
न्तास्यान्याभिर्ऋग्भिर्मन्त्रमा पृणचामेति । तथेति । तस्य हान्याभिर्ऋग्भिर्मन्त्रमा पपृचुः । ततो
हैनान्न मदयां चकार । तद्यदस्यान्याभिर्ऋग्भिर्मन्त्रमापृञ्चन्ति शान्त्या एव । ते ह पाप्मानमप
20 जघ्निरे । तेषामन्वपहतिं सर्पाः पाप्मानमप जघ्निरे । त एते ऽपहतपाप्मानो हित्वा पूर्वां
जीर्णां त्वचं नवयैव प्र यन्ति । अप पाप्मानं हते य एवं वेद ।

---

### 3. Agni als Hotar der Âditja und Añgiras (6, 34).

आदित्याश्च ह वा अङ्गिरसश्च स्वर्गे लोके ऽस्पर्धन्त । वयं पूर्व एष्यामो वयमिति । ते
हाङ्गिरसः पूर्वे श्वःसुत्यां स्वर्गस्य लोकस्य ददृशुः । ते ऽग्निं प्र जिघ्युः । अङ्गिरसां वा एको
ऽग्निः । परेहि । आदित्येभ्यः श्वःसुत्यां स्वर्गस्य लोकस्य प्र ब्रूहीति । ते हादित्या अग्निमेव
25 दृष्ट्वा सद्यःसुत्यां स्वर्गस्य लोकस्य ददृशुः । तानेत्याब्रवीत् । श्वःसुत्यां वः स्वर्गस्य लोकस्य
प्र ब्रूम इति । ते होचुः । अथ वयं तुभ्यं सद्यःसुत्यां स्वर्गस्य लोकस्य प्र ब्रूमः । त्वयैव वयं
होत्रा स्वर्गं लोकमेष्याम इति । स तथेत्युक्त्वा प्रत्युक्तः पुनरा जगाम । ते होचुः । प्रावोचा३
इति । प्रावोचमिति होवाच । अथो मे प्रतिप्रावोचन्निति । नो हि न प्रत्यज्ञास्था३ इति ।

प्रति वा अज्ञासमिति होवाच । यशसा वा एषो ऽभ्यैति यं आर्त्विज्येन । तं यः प्रतिरुन्धे-यशः स प्रति रुन्धेत् । तस्मान्न प्रत्यरौत्सीति । यदि त्वस्मादपोज्जिघांसेद्यज्ञेनास्मादपो-दियात् । यदि त्वयाज्यः स्वयमपोदितं तस्मात् ।

---

### 4. Die Geschichte von Çunaḥçepa (7, 13. fgg.).

हरिश्चन्द्रो ह वैधस ऐक्ष्वाको राजपुत्र आस । तस्य ह शतं जाया बभूवुः । तासु ह
5 पुत्रं न लेभे । तस्य ह पर्वतनारदौ गृह ऊषतुः । स ह नारदं पप्रच्छ ।

यन्न्विमं पुत्रमिच्छन्ति ये विजानन्ति ये च न ।
किं स्वित्पुत्रेण विन्दते तन्म आ चक्ष्व नारद ॥ १ ॥

इति । स एकया पृष्टो दशभिः प्रत्युवाच ।

ऋणमस्मिन्संनयति अमृतत्वं च गच्छति ।
10 पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥ १ ॥
यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि ।
यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः ॥ २ ॥
शश्वत्पुत्रेण पितरो ऽत्यायन्बहुलं तमः ।
आत्मा हि जज्ञ आत्मनः सैरावत्यतितारिणी ॥ ३ ॥
15 किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः ।
पुत्रं ब्रह्माण इच्छध्वं स वै लोको ऽवदावदः ॥ ४ ॥
अन्नं ह प्राणः शरणं ह वासो रूपं हिरण्यं पशवो ऽविवाहाः ।
सखा ह जाया कृपणं ह कन्या ज्योतिर्ह पुत्रः परमे विओमन् ॥ ५ ॥
पतिर्जायां प्र विशति गर्भो भूत्वाथ मातरम् ।
20 तस्यां पुनर्नवो भूत्वा दशमे मासि जायते ॥ ६ ॥
तज्जाया जाया भवति यदस्यां जायते पुनः ।
आ भूमिरेषा भवति बीजमेतन्नि धीयते ॥ ७ ॥
देवाश्चैतामृषयश्च तेजः समभरन्महत् ।
देवा मनुष्यानब्रुवन्नेषा वो जननी पुनः ॥ ८ ॥
25 नापुत्रस्य लोको ऽस्तीति तत्सर्वे पशवो विदुः ।
तस्मात्तु पुत्रो मातरं स्वसारं चाधि रोहति ॥ ९ ॥
एष पन्था उरुगायः सुशेवो यं पुत्रिण आक्रमन्ते विशोकाः ।
तं च पश्यन्ति पशवो वयांसि तत्ते मात्रापि मिथुनी भवन्ति ॥ १० ॥

इति हास्मा आख्याय ॥ १३ ॥

30 अथैनमुवाच । वरुणं राजानमुप धाव । पुत्रो मे जायतां तेन त्वा यजा इति । तथेति । स वरुणं राजानमुप ससार । पुत्रो मे जायतां तेन त्वा यजा इति । तथेति । तस्य ह पुत्रो जज्ञे

रोहितो नाम । तं होवाच । अजनि ते वै पुत्रो यजस्व मानेनेति । स होवाच । यदा वै
पशुर्निर्दशो भवत्यथ स मेध्यो भवति । निर्दशो न्वस्त्वथ त्वा यजा इति । तथेति । स ह
निर्दश आस । तं होवाच । निर्दशो न्वभूद्यजस्व मानेनेति । स होवाच । यदा वै पशोर्दन्ता
जायन्ते ऽथ स मेध्यो भवति । दन्ता न्वस्य जायन्तामथ त्वा यजा इति । तथेति । तस्य ह दन्ता
5 जज्ञिरे । तं होवाच । अज्ञत वा अस्य दन्ता यजस्व मानेनेति । स होवाच । यदा वै पशो-
र्दन्ताः पद्यन्ते ऽथ स मेध्यो भवति । दन्ता न्वस्य पद्यन्तामथ त्वा यजा इति । तथेति । तस्य
ह दन्ताः पेदिरे । तं होवाच । अपत्सत वा अस्य दन्ता यजस्व मानेनेति । स होवाच । यदा
वै पशोर्दन्ताः पुनर्जायन्ते ऽथ स मेध्यो भवति । दन्ता न्वस्य पुनर्जायन्तामथ त्वा यजा इति ।
तथेति । तस्य ह दन्ताः पुनर्जज्ञिरे । तं होवाच । अज्ञत वा अस्य पुनर्दन्ता यजस्व मानेनेति ।
10 स होवाच । यदा वै क्षत्रियः सांनाहुको भवत्यथ स मेध्यो भवति । संनाहं नु प्राप्नोत्वथ
त्वा यजा इति । तथेति । स ह संनाहं प्राप । तं होवाच । संनाहं नु प्रापद्यजस्व माने-
नेति । स तथेत्युक्त्वा पुत्रमामन्त्रयामास । तत । अयं वै मह्यं त्वामददात् । हन्त त्वयाहमिमं
यजा इति । स ह नेत्युक्त्वा धनुरादायारण्यमुपातस्थौ । स संवत्सरमरण्ये चचार ॥ १४ ॥

अथ हैक्ष्वाकं वरुणो जग्राह । तस्य होदरं जज्ञे । तदु ह रोहितः शुश्राव । सो
15 ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

नाना श्रान्ताय श्रीरस्ति इति रोहित शुश्रुम ।
पापो निषद्वरो जन इन्द्र इच्चरतः सखा ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह द्वितीयं संवत्सरमरण्ये चचार । सो
ऽरण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

20 पुष्पिण्यौ चरतो जङ्घे भूष्णुरात्मा फलग्रहिः ।
शेरे ऽस्य सर्वे पाप्मानः श्रमेण प्रपथे हताः ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह तृतीयं संवत्सरमरण्ये चचार । सो ऽर-
ण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

आस्ते भग आसीनस्य ऊर्ध्वस्तिष्ठति तिष्ठतः ।
25 शेते निपद्यमानस्य चराति चरतो भगः ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह चतुर्थं संवत्सरमरण्ये चचार । सो ऽर-
ण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

कलिः शयानो भवति संजिहानस्तु द्वापरः ।
उत्तिष्ठंस्त्रेता भवति कृतं सं पद्यते चरन् ॥

30 चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत् । इति ह पञ्चमं संवत्सरमरण्ये चचार । सो ऽर-
ण्याद्ग्राममेयाय । तमिन्द्रः पुरुषरूपेण पर्येत्योवाच ।

चरन्वै मधु विन्दति चरन्स्वादुमुदुम्बरम् ।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् ॥

चरैवेति चरैवेति वै मा ब्राह्मणो ऽवोचत्। इति ह षष्ठं संवत्सरमरण्ये चचार। सो ऽजीगर्तं
सौयवसिमृषिमशनायापरीतमरण्य उपेयाय। तस्य ह त्रयः पुत्रा आसुः। शुनःपुच्छः शुनःशेपः
शुनोलाङ्गूल इति। तं होवाच। ऋषे। अहं ते शतं ददामि। अहमेषामेकेनात्मानं निष्क्रीणा
इति। स ज्येष्ठं पुत्रं निगृह्णान उवाच। न न्विममिति। नो एवेममिति कनिष्ठं माता। तौ
5 ह मध्यमे संपादयां चक्रतुः शुनःशेपे। तस्य ह शतं दत्त्वा तमादाय सो ऽरण्याद्ग्राममे-
याय। स पितरमेत्योवाच। तत। हन्ताहमनेनात्मानं निष्क्रीणा इति। स वरुणं राजानमुप
ससार। अनेन त्वा यजा इति। तथेति। भूयान्वै ब्राह्मणः क्षत्रियादिति वरुण उवाच। त-
स्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच। तमेतमभिषेचनीये पुरुषं पशुमा लेभे॥ १५॥

तस्य ह विश्वामित्रो होतासीत्। जमदग्निरध्वर्युः। वसिष्ठो ब्रह्मा। अयास्य उद्गाता।
10 तस्मा उपाकृताय नियोक्तारं न विविदुः। स होवाचाजीगर्तः सौयवसिः। मह्यमपरं शतं
दत्त। अहमेनं नि योक्ष्यामीति। तस्मा अपरं शतं ददुः। तं स नि युयोज। तस्मा उपाकृताय
नियुक्तायाप्रीताय पर्यग्निकृताय विशसितारं न विविदुः। स होवाचाजीगर्तः सौयवसिः।
मह्यमपरं शतं दत्त। अहमेनं वि शसिष्यामीति। तस्मा अपरं शतं ददुः। सो ऽसिं निश्यान
एयाय। अथ ह शुनःशेप ईक्षां चक्रे। अमानुषमिव वै मा वि शसिष्यन्ति। हन्ताहं देवता उप
15 धावानीति। स प्रजापतिमेव प्रथमं देवतानामुप ससार कस्य नूनं कतमस्यामृतानामित्ये-
तयर्चा (१,२४,१)। तं प्रजापतिरुवाच। अग्निर्वै देवानां नेदिष्ठः। तमेवोप धावेति। सो
ऽग्निमुप ससार अग्नेर्वयं प्रथमस्यामृतानामित्येतयर्चा (१,२४,२)। तमग्निरुवाच। सविता वै
प्रसवानामीशे। तमेवोप धावेति। स सवितारमुप ससार अभि त्वा देव सवितरित्येतेन
तृचेन (१,२४,३—५)। तं सवितोवाच। वरुणाय वै राज्ञे नियुक्तो ऽसि। तमेवोप धा-
20 वेति। स वरुणं राजानमुप ससारात उत्तराभिरेकत्रिंशता। तं वरुण उवाच। अग्निर्वै
देवानां मुखं सुहृदयतमः। तं नु स्तुहि। अथ त्वोत्स्रक्ष्याम इति। सो ऽग्निं तुष्टावात उत्त-
राभिर्द्वाविंशत्या। तमग्निरुवाच। विश्वान्नु देवान्स्तुहि। अथ त्वोत्स्रक्ष्याम इति। स विश्वान्दे-
वांस्तुष्टाव नमो महद्भ्यो नमो अर्भकेभ्यो नम इत्येतयर्चा (१,२७,१३)। तं विश्वे देवा ऊचुः।
इन्द्रो वै देवानामोजिष्ठो बलिष्ठः सहिष्ठः सत्तमः पारयिष्णुतमः। तं नु स्तुहि। अथ त्वो-
25 त्स्रक्ष्याम इति। स इन्द्रं तुष्टाव यच्चिद्धि सत्य सोमपा इति चैतेन सूक्तेनोत्तरस्य च प-
ञ्चदशभिः (१,२९,१—३०,१५)। तस्मा इन्द्रः स्तूयमानः प्रीतो मनसा हिरण्यरथं ददौ।
तमेतया प्रतीयाय शश्वदिन्द्र (१,३०,१६) इति। तमिन्द्र उवाच। अश्विनौ नु स्तुहि। अथ
त्वोत्स्रक्ष्याम इति। सो ऽश्विनौ तुष्टावात उत्तरेण तृचेन। तमश्विना ऊचतुः। उषसं नु
स्तुहि। अथ त्वोत्स्रक्ष्याम इति स उषसं तुष्टावात उत्तरेण तृचेन। तस्य ह स्मर्च्यृच्युक्तायां
30 वितरो पाशो मुमुचे। कनीय ऐक्ष्वाकस्योदरं भवति। उत्तमस्यामेवर्च्युक्तायां वि पाशो
मुमुचे। अगद ऐक्ष्वाक आस॥ १६॥

तमृत्विज ऊचुः। त्वमेव नो ऽस्याह्नः संस्थामधि गच्छेति। अथ हैतं शुनःशेपो ऽञ्जःसवं
ददर्श। तमेताभिश्चतसृभिरभि सुषाव यच्चिद्धि त्वं गृहे गृह (१,२८,५—८) इति। अथैनं द्रो-

पाकशलमभ्यव निनाय उच्छिष्टं चम्वोर्भरेत्येतयर्चा (१,२८,९)। अथ हास्मिन्नन्वारब्धे
पूर्वाभिश्चतसृभिः सस्वाहाकाराभिर्जुहवां चकार। अथैनमवभृथमभ्यव निनाय त्वं नो अग्ने
वरुणस्य विद्वानित्येताभ्याम् (४,१,४,५)। अथैनमत ऊर्ध्वमग्निमाहवनीयमुपस्थापयां चकार
शुनश्चिच्छेपं निदितं सहस्रादिति (५,२,७)। अथ ह शुनःशेपो विश्वामित्रस्याङ्कमा ससाद।
5 स होवाचाजीगर्तः सौयवसिः। ऋषे। पुनर्मे पुत्रं देहीति। नेति होवाच विश्वामित्रः। देवा वा
इमं मह्यमरासतेति स ह देवरातो वैश्वामित्र आस। तस्यैते कापिलेयबाभ्रवाः। स होवा-
चाजीगर्तः सौयवसिः। त्वम्वेहि। वि ह्वयावहा इति। स होवाचाजीगर्तः सौयवसिः।

आङ्गिरसो जन्मनास्याजीगर्तिः श्रुतः कविः।
ऋषे पैतामहात्तन्तोर्मापगाः पुनरेहि माम्॥

10 इति। स होवाच शुनःशेपः।

अदात्त्वा शासहस्तं न यच्छूद्रेष्वलप्सत।
गवां त्रीणि शतानि त्वमवृणीथा मदङ्गिरः॥

इति। स होवाचाजीगर्तः सौयवसिः।

तद्वै मा तात तपति पापं कर्म मया कृतम्।
15 तदहं नि ह्नुवे तुभ्यं प्रति यन्तु शता गवाम्॥

इति। स होवाच शुनःशेपः।

यः सकृत्पातकं कुर्यात्कुर्यादेनत्ततो ऽपरम्।
नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतम्॥

इति। असंधेयमिति ह विश्वामित्र उप पपाद। स होवाच विश्वामित्रः।

20 भीम एव सौयवसिः शासेन विशिशासिषुः।
अस्थान्मैतस्य पुत्रो भूर्ममैवोपेहि पुत्रताम्॥

इति। स होवाच शुनःशेपः।

स वै यथा नो ज्ञपया राजपुत्र तथा वद।
यथैवाङ्गिरसो ऽहं सन्नुपेयां तव पुत्रताम्॥

25 इति। स होवाच विश्वामित्रः।

ज्येष्ठो मे त्वं पुत्राणां स्यास्तव श्रेष्ठा प्रजा स्यात्।
उपेया दैवं मे दायं तेन वै त्वोप मन्त्रये॥

इति। स होवाच शुनःशेपः।

संजानानेषु वै ब्रूयाः सौहार्दाय मम श्रियै।
30 यथाहं भरतर्षभ उपेयां तव पुत्रताम्॥

इति। अथ ह विश्वामित्रः पुत्राना मन्त्रयामास।

मधुच्छन्दाः शृणोतन ऋषभो रेणुरष्टकः।
ये के च भ्रातरः स्थन अस्मै ज्यैष्ठ्याय तिष्ठत॥

इति॥ १७॥

5 तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः। पञ्चाशदेव ज्यायांसो मधुच्छन्दसः। पञ्चाशत्कनीयांसः। तद्ये ज्यायांसो न ते कुशलं मेनिरे।ताननुव्या जहार। अन्तान्वः प्रजा भक्षीष्टेति। त एते ऽन्ध्राः पुण्ड्राः शबराः पुलिन्दा मूतिबा इत्युदन्त्या बहवो भवन्ति वैश्वामित्रा दस्यूनां भूयिष्ठाः। स होवाच मधुच्छन्दाः पञ्चाशता सार्धम्।

यन्नः पिता संजानीते तस्मिंस्तिष्ठामहे वयम्।
10 पुरस्त्वा सर्वे कुर्महे त्वामन्वञ्चो वयं स्मसि॥

इति। अथ ह विश्वामित्रः प्रतीतः पुत्रांस्तुष्टाव।

ते वै पुत्राः पशुमन्तो वीरवन्तो भविष्यथ।
ये मानं मे ऽनुगृह्णन्तो वीरवन्तमकर्त मा॥
पुरएत्रा वीरवन्तो देवरातेन गाथिनाः।
15 सर्वे राधिश्याः स्थ पुत्रा एष वः सद्विवाचनम्॥
एष वः कुशिका वीरो देवरातस्तमन्वित।
स च दायमुपेता मे विद्यां यामु च विद्मसि॥
ते सम्यञ्चो वैश्वामित्राः सर्वे साकं सरातयः।
देवराताय तस्थिरे धृत्यै श्रैष्ठ्याय गाथिनाः॥
20 अधीयत देवराता रिक्थयोरुभयोर्ऋषिः।
जह्नूनां चाधि तस्थिरे दैवे वेदे च गाथिनाः॥

---

#### 5. Der Zauber Brahmaṇaḥ Parimaraḥ (8, 28).

अथातो ब्रह्मणः परिमरः। यो ह वै ब्रह्मणः परिमरं वेद पर्येनं द्विषन्तो भ्रातृव्याः परि सपत्ना म्रियन्ते। अयं वै ब्रह्म यो ऽयं पवते। तमेताः पञ्च देवताः परि म्रियन्ते। विद्युद्वृष्टिश्चन्द्रमा आदित्यो ऽग्निः। विद्युद्वै विद्युत्य वृष्टिमनुप्र विशति। सान्तर्धीयते। तां न निर्जानन्ति। यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति। स ब्रूयाद्विद्युतो मरणे। द्विषन्मे
25 म्रियताम्। सो ऽन्तर्धीयताम्। तं मा निर्ज्ञासिषुरिति। क्षिप्रं हैवैनं न निर्जानन्ति। वृष्टिर्वै वृष्ट्वा चन्द्रमसमनुप्र विशति। सान्तर्धीयते। तां न निर्जानन्ति। यदा वै म्रियते ऽथान्तर्धीयते ऽथैनं न निर्जानन्ति। स ब्रूयाद्वृष्टेर्मरणे। द्विषन्मे म्रियताम्। सो ऽन्तर्धीयताम्। तं मा निर्ज्ञासिषुरिति। क्षिप्रं हैवैनं न निर्जानन्ति। चन्द्रमा वा अमावास्यायामादित्यमनुप्र विशति।

चितम् । इह समये तावदुपकारक एवायमुपलक्ष्यते ऽस्माकम् । तदयमेव यथाकर्तव्यं पृ-
च्छ्यताम् । तथा चोक्तम् ।

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥

5 मत्स्या ऊचुः । भो बक । अस्माकं कुत्र रक्षणोपायः । बको ब्रूते । अस्ति रक्षणहेतुर्जलाश-
यान्तरम् । तत्राहमेकैकशो युष्मान्नयामि । मत्स्यैरपि भयादुक्तम् । एवमस्तु । ततो ऽसौ
दुष्टबकस्तान्मत्स्यानेकैकान्नीत्वा कस्मिंश्चिद्देशे खादित्वा पुनरागत्य वदति । ते मया ज-
लाशयान्तरे स्थापिताः । अनन्तरं कुलीरस्तमुवाच । भो बक । मामपि तत्र नय । ततो बको
ऽप्यपूर्वकुलीरमांसार्थी सादरं तं नीत्वा स्थले धृतवान् । कुलीरो ऽपि मत्स्यकङ्काला-
10 कीर्णां भूमिं दृष्ट्वाचिन्तयत् । हा हतो ऽस्मि मन्दभाग्यः । भवतु । इदानीं समयोचितं व्यव-
हरामि । यतः ।

तावद्भयात्तु भेतव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥

अपरं च ।

अयुद्धे हि यदा पश्येन्न किंचिद्धितमात्मनः ।
युध्यमानस्तदा प्राज्ञो म्रियते रिपुणा सह ॥

15 इत्यालोच्य स कुलीरस्तस्य बकस्य ग्रीवां चिच्छेद । स बकः पञ्चत्वं गतः । अतो ऽहं
ब्रवीमि ।

भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान् ।
अतिलौल्याद्बकः कश्चिन्मृतः कर्कटकग्रहात् ॥

---

## XII. Sprüche.

अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ १ ॥
20 अकिंचनः परिपतन्सुखमास्वादयिष्यसि ।
अकिंचनः सुखं शेते समुत्तिष्ठति चैव ह ॥ २ ॥
अकुलानां कुले भावं कुलीनानां कुलक्षयम् ।
संयोगं विप्रयोगं च पश्यन्ति चिरजीविनः ॥ ३ ॥
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ।
25 युवैव धर्मशीलः स्यादनिमित्तं हि जीवितम् ॥ ४ ॥

अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयंकृतम् ।
तस्मात्तु पुरुषो यत्नाद्धर्मं संचिनुयाच्छनैः ॥ ५ ॥
अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नातिवर्तन्ते तथा कर्म पुराकृतम् ॥ ६ ॥
5 अजरामरवत्प्राज्ञो विद्यामर्थं च चिन्तयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥ ७ ॥
अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः ।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥ ८ ॥
अणुभ्यश्च महद्भ्यश्च शास्त्रेभ्यः कुशलो नरः ।
10 सर्वतः सारमादद्यात्पुष्पेभ्य इव षट्पदः ॥ ९ ॥
अतिकुपिता अपि सुजना योगेन मृदूभवन्ति न तु नीचाः ।
हेम्नः कठिनस्यापि द्रवणोपायो ऽस्ति न तृणानाम् ॥ १० ॥
अतिथिर्बालकश्चैव राजा भार्या तथैव च ।
अस्ति नास्ति न जानन्ति देहि देहि पुनः पुनः ॥ ११ ॥
15 अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते चक्षुः ॥ १२ ॥
अतिवादं न प्रवदेन्न वादयेद्यो नाहतः प्रतिहन्यान्न घातयेत् ।
हन्तुं च यो नेच्छति पापकं वै तस्मै देवाः स्पृहयन्त्यागताय ॥ १३ ॥
अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् ।
20 यो ऽपि ददाति शरीरं न ददाति स वित्तलेशमपि ॥ १४ ॥
अत्यन्तचञ्चलस्येह पारतस्य निबन्धने ।
कामं विज्ञायते युक्तिर्न स्त्रीचित्तस्य का चन ॥ १५ ॥
अत्यादरो भवेद्यत्र कार्यकारणवर्जितः ।
तत्र शङ्का प्रकर्तव्या परिणामे सुखावहा ॥ १६ ॥
25 अत्युदात्तगुणोपेता कृतपुण्यैः प्ररोपिता ।
शतशाखी भवत्येव यावन्मात्रापि सत्क्रिया ॥ १७ ॥
अत्येति रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना पूर्णा समुद्रमुदकार्णवम् ॥ १८ ॥
अथ प्रसन्नेन्दुमुखी सिताम्बरा समाययावुत्पलनीललोचना ।
30 सपङ्कजा श्रीरिव गां निषेवितुं सहंसवालव्यजना शरद्वधूः ॥ १९ ॥

अदर्शने दर्शनमात्रकामा दृष्टौ परिषङ्गरसैकलोलाः ।
आलिङ्गितायां पुनरायताक्ष्यामाशास्महे विग्रहयोरभेदम् ॥ २० ॥
अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ २१ ॥
5 अद्यापि नोज्झति हरः किल कालकूटं कूर्मो बिभर्ति धरणीं खलु पृष्ठभागे ।
अम्भोनिधिः सहति दुःसहवाडवाग्निमङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ २२ ॥
अद्यैव कुरु यच्छ्रेयो मा त्वां कालो ऽत्यगादयम् ।
अकृतेष्वेव कार्येषु मृत्युर्वै संप्रकर्षति ॥ २३ ॥
अधः करोति यद्रत्नं मूर्ध्ना धारयते तृणम् ।
10 दोषस्तस्यैव जलधे रत्नं रत्नं तृणं तृणम् ॥ २४ ॥
अधमं बाधते भूयो दुःखवेगो न तूत्तमम् ।
पादद्वयं व्रजत्याशु शीतस्पर्शो न चक्षुषी ॥ २५ ॥
अधमा धनमिच्छन्ति धनमानौ च मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ॥ २६ ॥
15 अधर्मेणैधते तावत्ततो भद्राणि पश्यति ।
ततः सपत्नाञ्जयति समूलस्तु विनश्यति ॥ २७ ॥
अनधिगतमनोरथस्य पूर्वं शतगुणितेव गता मम त्रियामा ।
यदि तु तव समागमे तथैव प्रसरति सुभ्रु ततः कृती भवेयम् ॥ २८ ॥
अनर्थाश्चार्थरूपेण अर्थाश्चानर्थरूपिणः ।
20 अर्थायैव हि केषां चिद्धननाशो भवत्युत ॥ २९ ॥
अनवाप्यं च शोकेन शरीरं चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ॥ ३० ॥
अनित्ये प्रियसंवासे संसारे चक्रवद्गतौ ।
पथि संगतमेवैतद्भ्राता माता पिता सखा ॥ ३१ ॥
25 अनुकुरुतः खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः ।
विदधाति रन्ध्रमेको गुणवानन्यस्त्वपिदधाति ॥ ३२ ॥
अनुगन्तुं सतां वर्त्म कृत्स्नं यदि न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ ३३ ॥
अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु ।
30 संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ ३४ ॥

अन्यथा चिन्तिता ह्यर्था नरैस्तात मनस्विभिः ।
अन्यथैव प्रपद्यन्ते दैवादिति मतिर्मम ॥ ३५ ॥
अन्यथा परिदृष्टानि मुनिभिस्तत्त्वदर्शिभिः ।
अन्यथा परिवर्तन्ते वेगा इव नभस्वतः ॥ ३६ ॥
5 अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥ ३७ ॥
अन्यान्परिवदन्साधुर्यथा हि परितप्यते ।
तथा परिवदन्नन्यांस्तुष्टो भवति दुर्जनः ॥ ३८ ॥
अन्यो धनं प्रेतगतस्य भुङ्क्ते वयांसि चाग्निश्च शरीरधातून् ।
10 द्वाभ्यामयं सह गच्छत्यमुत्र पुण्येन पापेन च वेष्ट्यमानः ॥ ३९ ॥
अपकारिषु मा पापं चिन्तयस्व कदा चन ।
स्वयमेव पतिष्यन्ति कूलजाता इव द्रुमाः ॥ ४० ॥
अपकृत्य बुद्धिमतो दूरस्थो ऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ ४१ ॥
15 अपमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः ।
स्वकार्यमुद्धरेत्प्राज्ञः कार्यध्वंसो हि मूर्खता ॥ ४२ ॥
अपूर्वः को ऽपि कोपाग्निः सज्जनस्य खलस्य च ।
एकस्य शाम्यति स्नेहाद्वर्धते ऽन्यस्य वारितः ॥ ४३ ॥
अपूर्वं चौर्यमभ्यस्तं त्वया चञ्चललोचने ।
20 दिवापि जाग्रतां पुंसां चेतो हरसि दूरतः ॥ ४४ ॥
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ४५ ॥
अभिशस्तं प्रपश्यन्ति दरिद्रं पार्श्वतः स्थितम् ।
दारिद्र्यं पातकं लोके न तच्छंसितुमर्हति ॥ ४६ ॥
25 अभ्यावहति कल्याणं विविधं वाक्सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ४७ ॥
अभ्रच्छाया तृणादग्निः खलप्रीतिः स्थले जलम् ।
वेश्यारागः कुमित्रं च षडेते बुद्बुदोपमाः ॥ ४८ ॥
अमित्रानपि कुर्वीत मित्राण्युपचयावहान् ।
30 अहिते वर्तमानानि मित्राण्यपि परित्यजेत् ॥ ४९ ॥

अमीषां प्राणानां तुलितबिसिनीपत्त्रपयसां
कृते किं नास्माभिर्विगलितविवेकैर्व्यवसितम् ।
यदाढ्यानामग्रे द्रविणमदनिःसंज्ञमनसां
कृतं वीतव्रीडैर्निजगुणकथापातकमपि ॥ ५० ॥
5 अमृतममृतं कः संदेहो मधून्यपि नान्यथा
मधुरमधिकं चूतस्यापि प्रसन्नरसं फलम् ।
सकृदपि पुनर्मध्यस्थः सन्रसान्तरविज्ज्ञनो
वदतु यदिहान्यत्स्वादु स्यात्प्रियादशनच्छदात् ॥ ५१ ॥
अमृतस्येव संतृप्येदवमानस्य पण्डितः ।
10 सुखं ह्यवमतः शेते यो ऽवमन्ता स नश्यति ॥ ५२ ॥
अयःपिण्ड इवोत्तप्ते खलानां हृदये तणात् ।
पतिता एव नेद्यन्ते गुणास्तोयकणा इव ॥ ५३ ॥
अर्थप्राणविनाशसंशयकरीं प्राप्यापदं दुस्तरां
प्रत्यासन्नभयो न वेत्ति विभवं स्वं जीवितं काङ्क्षति ।
15 उत्तीर्णस्तु ततो धनार्थमपरां भूयो विशत्यापदं
प्राणानां च धनस्य चाधमधियामन्योऽन्यहेतुः पणः ॥ ५४ ॥
अर्थिनस्त्वरितदानेन तृप्तिर्भवति यादृशी ।
बहुदानं विलम्बेन न तादृक्तृप्तिकारकम् ॥ ५५ ॥
अर्थिनां मित्रवर्गस्य विद्विषां च पराङ्मुखः ।
20 यो न याति पिता तेन पुत्री माता च वीरसूः ॥ ५६ ॥
अलब्धे रागिणो लोका अहो लब्धे विरागिणः ।
हेमन्ते तापमीहन्ते हन्त ग्रीष्मे हिमं पुनः ॥ ५७ ॥
अलमलमघृणस्य तस्य नाम्ना पुनरपि सैव कथा गतः स कालः ।
कथय कथय वा तथापि दूति प्रतिवचनं द्विषतो ऽपि माननीयम् ॥ ५८ ॥
25 अवश्यं यातारश्चिरतरमुषित्वापि विषया
वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् ।
व्रजन्तः स्वातन्त्र्यादतुलपरितापाय मनसः
स्वयंत्यक्तास्त्वेते शमसुखमनन्तं विदधति ॥ ५९ ॥
अवश्यं निधनं सर्वैर्गन्तव्यमिह मानवैः ।
30 अवश्यभाविन्यर्थे वै संतापो नेह विद्यते ॥ ६० ॥
अव्यये व्ययमायाति व्यये याति सुविस्तरम् ।
अपूर्वः को ऽपि भाण्डारस्तव भारति दृश्यते ॥ ६१ ॥

अव्याहृतं व्याहृताच्छ्रेय आहुः सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
धर्मं वदेद्व्याहृतं तत्तृतीयं प्रियं वदेद्व्याहृतं तच्चतुर्थम् ॥ ६२ ॥

अश्नीमहि वयं भिक्षामाशावासो वसीमहि ।
शयीमहि महीपृष्ठे कुर्वीमहि किमीश्वरैः ॥ ६३ ॥

5 असंख्याः परदोषज्ञा गुणज्ञा अपि के चन ।
स्वयमेव स्वदोषज्ञा विद्यन्ते यदि पञ्चषाः ॥ ६४ ॥

असन्तो ऽभ्यर्थिताः सद्भिः क्व चित्कार्ये कदा चन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥ ६५ ॥

असाराः सन्त्वेते विरतिविरसायासविषया
10 जुगुप्स्यन्तां यद्वा ननु सकलदोषास्पदमिति ।
तथाप्यन्तस्तत्त्वे प्रणिहितधियामप्यतिबल-
स्तदीयो ऽनाख्येयः स्फुरति हृदये को ऽपि महिमा ॥ ६६ ॥

अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
15 किं त्वन्ये ऽपि जना वदन्ति सुभगो ऽप्यस्याः प्रियो नान्यतो
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम् ॥ ६७ ॥

अस्या मनोहराकारकबरीभारवर्जिताः ।
लज्जयेव वने वासं चक्रुश्चमरबर्हिणः ॥ ६८ ॥

अहमेव गुरुः सुदारुणानामिति हालाहल मा स्म तात दृप्यः ।
20 ननु सन्ति भवादृशानि भूयो भुवने ऽस्मिन्वचनानि दुर्जनानाम् ॥ ६९ ॥

अहान्यस्तमयान्तानि उदयान्ता च शर्वरी ।
सुखस्यान्तं सदा दुःखं दुःखस्यान्तं सदा सुखम् ॥ ७० ॥

अहो धार्ष्ट्यमसाधूनां निन्दतामनघाः स्त्रियः ।
मुष्णतामिव चौराणां तिष्ठ चौरेति जल्पताम् ॥ ७१ ॥

25 आकारमात्रविज्ञातसंपादितमनोरथाः ।
धन्यास्ते ये न शृण्वन्ति दीनाः प्रणयिनां गिरः ॥ ७२ ॥

आकिंचन्यं सुखं लोके पथ्यं शिवमनामयम् ।
अनमित्रलाभो ह्येष दुर्लभः सुलभो मतः ॥ ७३ ॥

आकिंचन्ये च राज्ये च विशेषः सुमहानयम् ।
30 नित्योद्विग्नो हि धनवान्मृत्योरास्यगतो यथा ॥ ७४ ॥

आगच्छन्सूचितो येन येनानीतो गृहं प्रति ।
प्रथमं सखि कः पूज्यः किं काकः किं क्रमेलकः ॥ ७५ ॥

आढ्यो वापि दरिद्रो वा दुःखितः सुखितो ऽपि वा ।
निर्दोषश्च सदोषश्च वयस्यः परमा गतिः ॥ ७६ ॥
आत्मनात्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ७७ ॥
5 आत्मनो मुखदोषेण बध्यन्ते शुकशारिकाः ।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थसाधनम् ॥ ७८ ॥
आत्मापि चायं न मम सर्वा वा पृथिवी मम ।
यथा मम तथान्येषामिति चिन्त्य न मे व्यथा ॥ ७९ ॥
आत्मोत्कर्षं न मार्गेत परेषां परिनिन्दया ।
10 स्वगुणैरेव मार्गेत विप्रकर्षं पृथग्जनात् ॥ ८० ॥
आदौ तन्व्यो बृहन्मध्या विस्तारिण्यः पदे पदे ।
यायिन्यो न निवर्तन्ते सतां मैत्र्यः सरित्समाः ॥ ८१ ॥
आयुः कल्लोललोलं कतिपयदिवसस्थायिनी यौवनश्री-
रर्थाः संकल्पकल्पा घनसमयतडिद्विभ्रमा भोगपूगाः ।
15 कण्ठाश्लेषोपगूढं तदपि च न चिरं यत्प्रियाभिः प्रणीतं
ब्रह्मण्यासक्तचित्ता भवत भवभयाम्भोधिपारं तरीतुम् ॥ ८२ ॥
आयुर्वर्षशतं नृणां परिमितं रात्रौ तदर्धं गतं
तस्यार्धस्य परस्य चार्धमपरं बालत्ववृद्धत्वयोः ।
शेषं व्याधिवियोगदुःखसहितं सेवादिभिर्नीयते
20 जीवे वारितरंगबुद्बुदसमे सौख्यं कुतः प्राणिनाम् ॥ ८३ ॥
आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् ।
दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥ ८४ ॥
आलस्यं हि मनुष्याणां शरीरस्थो महान्रिपुः ।
नास्त्युद्यमसमो बन्धुः कुर्वाणो नावसीदति ॥ ८५ ॥
25 इतरपापफलानि यथेच्छया वितर तानि सहे चतुरानन ।
अरसिकेषु कवित्वनिवेदनं शिरसि मा लिख मा लिख मा लिख ॥ ८६ ॥
इदं कृतमिदं कार्यमिदमन्यत्कृताकृतम् ।
एवमीहासमायुक्तं मृत्युरादाय गच्छति ॥ ८७ ॥
इन्दीवरेण नयनं मुखमम्बुजेन कुन्देन दन्तमधरं नवपल्लवेन ।
30 अङ्गानि चम्पकदलैः स विधाय वेधाः कान्ते कथं घटितवानुपलेन चेतः ॥ ८८ ॥
इन्द्रियाणां प्रसृष्टानां हयानामिव वर्त्मसु ।
धृतिं कुर्वीत सारथ्ये धृत्या तानि जयेद्ध्रुवम् ॥ ८९ ॥

इयमुन्नतिसत्त्वशालिनां महतां कापि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ ९० ॥
इच्छा धनस्य न सुखा लब्धा चिन्ता च भूयसी ।
लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा ॥ ९१ ॥
5 उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णाः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटको ऽपि न मया तृष्णे ऽधुना मुञ्च माम् ॥ ९२ ॥
उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं मम
10 श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं सुखमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ९३ ॥
उत्तुङ्गैस्तरुभिः किमेभिरखिलैराकाशसंस्पर्धिभि-
र्धन्यो ऽसौ नितरामुलूपविटपी नद्यास्तटे ऽवस्थितः ।
15 एवं यः कृतबुद्धिरुद्धतजलव्यालोलवीचीवशा-
न्मज्जन्तं जनमुद्धरामि सहसा तेनैव मज्जामि वा ॥ ९४ ॥
उत्थानवीरः पुरुषो वाग्वीरानधितिष्ठति ।
उत्थानवीरान्वाग्वीरा रमयन्त उपासते ॥ ९५ ॥
उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः ।
20 बालवैधव्यदग्धानां कुलस्त्रीणां कुचा इव ॥ ९६ ॥
उत्पन्नपरितापस्य बुद्धिर्भवति यादृशी ।
तादृशी यदि पूर्वं स्यात्कस्य न स्यान्महोदयः ॥ ९७ ॥
उदारचरितात्त्यागी याचितः कृपणो ऽधिकः ।
एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम् ॥ ९८ ॥
25 उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ ९९ ॥
उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥ १०० ॥
उपकर्तुं यथा स्वल्पः समर्थो न तथा महान् ।
30 प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥ १०१ ॥
उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥ १०२ ॥

उपाध्यायान्दशाचार्य आचार्याणां शतं पिता ।
सहस्रं तु पितृन्माता गौरवेणातिरिच्यते ॥ १०३ ॥
उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरो ऽपि रागाद्गलितं न लक्षितम् ॥ १०४ ॥
5 एक एव पदार्थस्तु त्रिधा भवति वीक्षितः ।
कुणपं कामिनी मांसं योगिभिः कामिभिः श्वभिः ॥ १०५ ॥
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ १०६ ॥
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
10 भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ १०७ ॥
एकमपि सतो सुकृतं विकसति तैलं यथा जले न्यस्तम् ।
असतामुपकारशतं संकुचति सुशीतले घृतवत् ॥ १०८ ॥
एकेन तिष्ठताधस्तादन्येनोपरि तिष्ठता ।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ १०९ ॥
15 एको ऽहमसहायो ऽहं कृशो ऽहमपरिच्छदः ।
स्वप्ने ऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ ११० ॥
एको ऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि ॥ १११ ॥
एतत्कामफलं लोके यद्द्वयोरेकचित्तता ।
20 अन्यचित्तकृते कामे शवयोरिव संगमः ॥ ११२ ॥
एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
ते ऽमी मानुषराक्षसाः परहितं स्वार्थाय विघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ११३ ॥
25 और्वा इवातिलुब्धा भवन्ति धनलवणवारिबहुतृष्णाः ।
तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥ ११४ ॥
कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ११५ ॥
कं पृच्छाम सुराः स्वर्गे निवसामो वयं भुवि ।
30 किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ ११६ ॥
करोति निर्मलाधारस्तुच्छस्यापि महार्घताम् ।
अम्बुनो बिन्दुरल्पो ऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ११७ ॥

इयमुन्नतिसत्त्वशालिनां महतां कापि कठोरचित्तता ।
उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ॥ ९० ॥

ईहा धनस्य न सुखा लब्धा चिन्ता च भूयसी ।
लब्धनाशो यथा मृत्युर्लब्धं भवति वा न वा ॥ ९१ ॥

5 उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णाः सरितां पतिर्नृपतयो यत्नेन संतोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटको ऽपि न मया तृष्णे ऽधुना मुञ्च माम् ॥ ९२ ॥

उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्यभारं मम
10 श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तो धनवर्जितेन सहसा गत्वा श्मशाने शवो
दारिद्र्यान्मरणं वरं सुखमिति ज्ञात्वैव तूष्णीं स्थितः ॥ ९३ ॥

उत्तुङ्गैस्तरुभिः किमेभिरखिलैराकाशसंस्पर्धिभि-
र्धन्यो ऽसौ नितरामुलूपविटपी नद्यास्तटे ऽवस्थितः ।
15 एवं यः कृतबुद्धिरुद्धतजलव्यालोलवीचीवशा-
न्मज्जन्तं जनमुद्धरामि सहसा तेनैव मज्जामि वा ॥ ९४ ॥

उत्थानवीरः पुरुषो वाग्वीरानधितिष्ठति ।
उत्थानवीरान्वाग्वीरा रमयन्त उपासते ॥ ९५ ॥

उत्थाय हृदि लीयन्ते दरिद्राणां मनोरथाः ।
20 बालवैधव्यदग्धानां कुलस्त्रीणां कुचा इव ॥ ९६ ॥

उत्पन्नपरितापस्य बुद्धिर्भवति यादृशी ।
तादृशी यदि पूर्वं स्यात्कस्य न स्यान्महोदयः ॥ ९७ ॥

उदारचरितात्त्यागी याचितः कृपणो ऽधिकः ।
एको धनं ततः प्राणानन्यः प्राणांस्ततो धनम् ॥ ९८ ॥

25 उदेति सविता ताम्रस्ताम्र एवास्तमेति च ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥ ९९ ॥

उन्नतं पदमवाप्य यो लघुर्हेलयैव स पतेदिति ब्रुवन् ।
शैलशेखरगतो दृषत्कणश्चारुमारुतधुतः पतत्यधः ॥ १०० ॥

उपकर्तुं यथा स्वल्पः समर्थो न तथा महान् ।
30 प्रायः कूपस्तृषां हन्ति सततं न तु वारिधिः ॥ १०१ ॥

उपकारगृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पादलग्नं करस्थेन कण्टकेनेव कण्टकम् ॥ १०२ ॥

उपाध्यायान्दशाचार्य आचार्याणां शतं पिता ।
सहस्रं तु पितॄन्माता गौरवेणातिरिच्यते ॥ १०३ ॥
उपोढरागेण विलोलतारकं तथा गृहीतं शशिना निशामुखम् ।
यथा समस्तं तिमिरांशुकं तया पुरो ऽपि रागाद्गलितं न लक्षितम् ॥ १०४ ॥
5 एक एव पदार्थस्तु त्रिधा भवति वीक्षितः ।
कुणपं कामिनी मांसं योगिभिः कामिभिः श्वभिः ॥ १०५ ॥
एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ १०६ ॥
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
10 भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥ १०७ ॥
एकमपि सतां सुकृतं विकसति तैलं यथा जले न्यस्तम् ।
असतामुपकारशतं संकुचति सुशीतले घृतवत् ॥ १०८ ॥
एकेन तिष्ठताधस्तादन्येनोपरि तिष्ठता ।
दातृयाचकयोर्भेदः कराभ्यामेव सूचितः ॥ १०९ ॥
15 एको ऽहमसहायो ऽहं कृशो ऽहमपरिच्छदः ।
स्वप्ने ऽप्येवंविधा चिन्ता मृगेन्द्रस्य न जायते ॥ ११० ॥
एको ऽहमस्मीति च मन्यसे त्वं न हृच्छयं वेत्सि मुनिं पुराणम् ।
यो वेदिता कर्मणः पापकस्य तस्यान्तिके त्वं वृजिनं करोषि ॥ १११ ॥
एतत्कामफलं लोके यद्द्वयोरेकचित्तता ।
20 अन्यचित्तकृते कामे शवयोरिव संगमः ॥ ११२ ॥
एते सत्पुरुषाः परार्थघटकाः स्वार्थं परित्यज्य ये
सामान्यास्तु परार्थमुद्यमभृतः स्वार्थाविरोधेन ये ।
ते ऽमी मानुषराक्षसाः परहितं स्वार्थाय निघ्नन्ति ये
ये तु घ्नन्ति निरर्थकं परहितं ते के न जानीमहे ॥ ११३ ॥
25 और्वा इवातिलुब्धा भवन्ति धनलवणवारिबहुतृष्णाः ।
तृणलवमिव निजदेहं त्यजन्ति लेशं न वित्तस्य ॥ ११४ ॥
कन्या वरयते रूपं माता वित्तं पिता श्रुतम् ।
बान्धवाः कुलमिच्छन्ति मिष्टान्नमितरे जनाः ॥ ११५ ॥
कं पृच्छाम सुराः स्वर्गे निवसामो वयं भुवि ।
30 किं वा काव्यरसः स्वादुः किं वा स्वादीयसी सुधा ॥ ११६ ॥
करोति निर्मलाधारस्तुच्छस्यापि महार्घताम् ।
अम्बुनो बिन्दुरल्पो ऽपि शुक्तौ मुक्ताफलं भवेत् ॥ ११७ ॥

कवयः परितुष्यन्ति नेतरे कविसूक्तिभिः ।
नह्यकूपारवत्कूपा वर्धन्ते विधुकान्तिभिः ॥ ११८ ॥
कश्चित्पुमान्निपतति मां प्रति तूलवाचं सो ऽहं तमाभवनमेत्य मुदं प्रयामि ।
शोकं व्रजामि पुनरेव यतस्तपस्वी चारित्रतः स्खलितवानिति मन्निमित्तम् ॥ ११९ ॥
5 काकः कृष्णः पिकः कृष्णः को भेदः पिककाकयोः ।
वसन्तसमये प्राप्ते काकः काकः पिकः पिकः ॥ १२० ॥
कान्ते सागसि शायिते प्रियसखीवेषं विधायागते
भ्रान्त्यालिङ्ग्य मया रहस्यमुदितं तत्संगमाकाङ्क्षया ।
मुग्धे दुष्करमेतदित्यतितरामुक्त्वा सहासं बला-
10 दालिङ्ग्य छलितास्मि तेन कितवेनाद्य प्रदोषागमे ॥ १२१ ॥
कामं वनेषु हरिणास्तृणेन जीवन्त्ययत्नसुलभेन ।
विदधति धनिषु न दैन्यं ते किल पशवो वयं सुधियः ॥ १२२ ॥
कामं कामयमानस्य यदा कामः समृध्यते ।
अथैनमपरः कामस्तृष्णा विध्यति बाणवत् ॥ १२३ ॥
15 कारणोत्पन्नकोपो ऽपि सांप्रतं प्रमदाजनः ।
निशि शीतापदेशेन गाढमालिङ्गति प्रियम् ॥ १२४ ॥
कालेन कृष्णाश्च सिताश्च रात्र्यः कालेन चन्द्रः प्रतिपूर्णबिम्बः ।
नाकालतः पुष्पफलं द्रुमाणां नाकालवेगाः सरितो वहन्ति ॥ १२५ ॥
किं करिष्यन्ति वक्तारः श्रोता यत्र न विद्यते ।
20 नग्नक्षपणके देशे रजकः किं करिष्यति ॥ १२६ ॥
किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।
भवन्ति सुतरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ १२७ ॥
किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो न वा ॥ १२८ ॥
25 कुलीनस्य च या निन्दा वधो वामित्रकर्षण ।
महागुणो वधो राजन्न तु निन्दा कुजीविका ॥ १२९ ॥
कृतोपकारं प्रियबन्धुमर्कं मा द्राक्ष्म हीनांशुमधः पतन्तम् ।
इतीव मत्वा नलिनीवधूभिर्निमीलितान्यम्बुरुहेक्षणानि ॥ १३० ॥
कृत्वा पापं हि संतप्य तस्मात्पापात्प्रमुच्यते ।
30 नैवं कुर्यां पुनरिति निवृत्त्या पूयते तु सः ॥ १३१ ॥
कृत्वा मानुष्यकं कर्म सृत्वाजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ १३२ ॥

कृपणेन समो दाता न कश्चिद्भुवि विद्यते ।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति ॥ १३३ ॥
के चिद्वस्तुनि नो वाचि के चिद्वाचि न वस्तुनि ।
वाचि वस्तुनि चाप्यन्ये नान्ये वाचि न वस्तुनि ॥ १३४ ॥
5 के वा भुवि चिकित्सन्ते रोगार्तान्मृगपक्षिणः ।
श्वापदानि दरिद्राश्च प्रायो नार्ता भवन्ति ते ॥ १३५ ॥
कैवर्तकर्कशकराग्रकराच्युतो ऽपि जाले पुनर्निपतितः शफरो वराकः ।
जालात्पुनर्विगलितो गिलितो बकेन वामे विधौ बत कुतो व्यसनानिवृत्तिः ॥ १३६ ॥
कोकिलेन कृतं मौनं प्रावृट्काले स्वलज्जया ।
10 यत्र भेकोपतिर्वक्ता तत्रास्माकं कुतो वचः ॥ १३७ ॥
कोकिलो ऽहं भवान्काकः समानः कालिमावयोः ।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः ॥ १३८ ॥
कोपो यत्र भ्रुकुटिरचना निग्रहो यत्र मौनं
यत्रान्योऽन्यस्मितमनुनयो दृष्टिपातः प्रसादः ।
15 तस्य प्रेम्णास्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ १३९ ॥
क्रीतान्यतो ऽपि मूल्येन मार्जारः पोष्यते हितः ।
अहितो हन्यते यत्नाद्गृहजातो ऽपि मूषकः ॥ १४० ॥
क्लीबा हि दैवमेवैकं प्रशंसन्ति न पौरुषम् ।
20 दैवं पुरुषकारेण घ्नन्ति शूराः सदोद्यमाः ॥ १४१ ॥
क्व गतासि भ्रातः कृतवसतयो यत्र धनिनः
किमर्थं प्राणानां स्थितिमनुविधातुं कथमपि ।
धनैर्याञ्चालब्धैर्ननु परिभवो ऽभ्यर्थनफलं
निकारो ऽग्रे पश्चाद्धनमहह भोस्तद्धि निधनम् ॥ १४२ ॥
25 क्व चिद्वीणावादः क्व चिदपि च हा हेति रुदितं
क्व चिद्विद्वद्गोष्ठी क्व चिदपि सुरामत्तकलहः ।
क्व चिद्रम्या रामा क्व चिदपि जराजर्जरतनु-
र्न जाने संसारः किममृतमयः किं विषमयः ॥ १४३ ॥
क्व प्रस्थितासि करभोरु घने निशीथे
30 प्राणाधिको वसति यत्र जनः प्रियो मे ।
एकाकिनी वद कथं न बिभेषि बाले
नन्वस्ति पुङ्खितशरो मदनः सहायः ॥ १४४ ॥

यो हि दीर्घासितान्तस्य विलासस्खलितभ्रुणाः ।
कान्तामुखस्यावशगस्तस्मै नृपशवे नमः ॥ ३०१ ॥

रथः शरीरं पुरुषस्य दृष्टमात्मा नियन्तेन्द्रियाण्याहुरश्वान् ।
तैरप्रमत्तः कुशली सदश्वैर्दान्तैः सुखं याति रथीव धीरः ॥ ३०२ ॥

5 राजवत्पञ्च वर्षाणि दश वर्षाणि दासवत् ।
प्राप्ते तु षोडशे वर्षे पुत्रं मित्रवदाचरेत् ॥ ३०३ ॥

रात्रिर्गमिष्यति भविष्यति सुप्रभातं भास्वानुदेष्यति हसिष्यति पद्मजालम् ।
इत्थं विचिन्तयति कोशगते द्विरेफे हा हन्त हन्त नलिनीं गज उज्जहार ॥ ३०४ ॥

रे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः ।
10 जगत्पश्यामि येनाहं न मां पश्यति कश्चन ॥ ३०५ ॥

रोहते सायकैर्विद्धं वनं परशुनाहतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ३०६ ॥

लब्धानामपि वित्तानां बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ३०७ ॥

15 लाङ्गूलचालनमधश्चरणावपातं भूमौ निपत्य वदनोदरदर्शनं च ।
श्वा पिण्डदस्य कुरुते गजपुंगवस्तु धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ ३०८ ॥

लोभश्चेदगुणेन किं पिशुनता यद्यस्ति किं पातकैः
सत्यं चेत्तपसा च किं शुचि मनो यद्यस्ति तीर्थेन किम् ।
सौजन्यं यदि किं गुणैः स्वमहिमा यद्यस्ति किं मण्डनैः
20 सद्विद्या यदि किं धनैरपयशो यद्यस्ति किं मृत्युना ॥ ३०९ ॥

वदन्ती जारवृत्तान्तं पत्यौ धूर्ता सखीधिया ।
पतिं बुद्ध्वा सखि ततः प्रबुद्धास्मीत्यपूरयत् ॥ ३१० ॥

वरं दारिद्र्यमन्यायप्रभवाद्विभवादिह ।
कृशताभिमता देहे पीनता न तु शोकतः ॥ ३११ ॥

25 वरमसौ दिवसो न पुनर्निशा ननु निशैव वरं न पुनर्दिवा ।
उभयमेतदुपैत्वथ वा क्षयं प्रियजनेन न यत्र समागमः ॥ ३१२ ॥

वस्तुष्वशक्येषु समुद्यमश्चेच्छक्येषु मोहादसमुद्यमश्च ।
शक्येषु काले न समुद्यमश्च त्रिधैव कार्यव्यसनं वदन्ति ॥ ३१३ ॥

वासःखण्डमिदं प्रयच्छ यदि वा स्वाङ्के गृहाणार्भकं
30 रिक्तं भूतलमत्र नाथ भवतः पृष्ठे पलालोच्चयः ।
दंपत्योरिति जल्पतोर्निशि यदा चौरः प्रविष्टस्तदा
लब्धं कर्पटमन्यतस्तदुपरि क्षिप्त्वा रुदन्निर्गतः ॥ ३१४ ॥

विद्या विवादाय धनं मदाय प्रज्ञाप्रकर्षः परवञ्चनाय ।
अत्युन्नतिर्लोकपराभवाय येषां प्रकाशस्तिमिराय तेषाम् ॥ ३१५ ॥
विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
नहि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ ३१६ ॥
5 विसृज्य सूर्पवद्दोषान्गुणान्गृह्णन्ति साधवः ।
दोषग्राही गुणत्यागी चालनीव हि दुर्जनः ॥ ३१७ ॥
वेपथुर्मलिनं वक्त्रं दीना वाग्गद्गदः स्वरः ।
मरणे यानि चिह्नानि तानि चिह्नानि याचके ॥ ३१८ ॥
व्योमनि शम्बाकुरुते चित्रं निर्माति यत्नतः सलिले ।
10 स्नपयति पवनं सलिलैर्यस्तु खले चरति सत्कारम् ॥ ३१९ ॥
शक्यं वारयितुं जलेन हुतभुक्छत्त्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभौ ।
व्याधिर्भेषजसंग्रहैश्च विविधैर्मन्त्रप्रयोगैर्विषं
सर्वस्यौषधमस्ति शास्त्रविहितं मूर्खस्य नास्त्यौषधम् ॥ ३२० ॥
15 शत्रवो ज्ञातयश्चैव लाभं पश्यन्ति न व्ययम् ।
आयं व्ययं च मध्यस्था व्ययमेव सुहृज्जनाः ॥ ३२१ ॥
शत्रोरपि गुणा ग्राह्या दोषा वाच्या गुरोरपि ।
सर्वथा सर्वयत्नेन पुत्रे शिष्ये हितं वदेत् ॥ ३२२ ॥
शरणं किं प्रपन्नानि विषवन्मारयन्ति वा ।
20 न त्यज्यन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ ३२३ ॥
शुष्ककाष्ठैर्भवेत्कार्यं लोष्टैरपि च पांसुभिः ।
न तु स्थानात्परिभ्रष्टैः कार्यं स्याद्वसुधाधिपैः ॥ ३२४ ॥
श्लाघ्यं नीरसकाष्ठताडनशतं श्लाघ्यः प्रचण्डातपः
क्लेशः श्लाघ्यतरः सुपङ्कनिचयैः श्लाघ्यो ऽतिदाहो ऽनले ।
25 यत्कान्ताकुचपार्श्वबाहुलतिकाहिन्दोललीलासुखं
लब्धं कुम्भवर त्वया नहि सुखं दुःखैर्विना लभ्यते ॥ ३२५ ॥
श्वेतेन शिरसा वृद्धो नैव वर्षशती भवेत् ।
यस्य बुद्धिः परिणतः स वै वृद्धतरो नृणाम् ॥ ३२६ ॥
संयोगा विप्रयोगान्ता जातानां प्राणिनां ध्रुवम् ।
30 बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥ ३२७ ॥
सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ३२८ ॥

सगुणो निर्गुणो वापि सक्रायो बलवत्तरः ।
तुषेणापि परित्यक्तस्तण्डुलो नाङ्कुरायते ॥ ३२९ ॥
संगमविरहविकल्पे वरमिह विरहो न संगमस्तस्याः ।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे ॥ ३३० ॥
5 सति प्रदीपे सत्यग्नौ सत्सु तारारवीन्दुषु ।
विना मे मृगशावाक्ष्या तमोभूतमिदं जगत् ॥ ३३१ ॥
सत्यं न मे विभवनाशकृतास्ति चिन्ता भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ ३३२ ॥
सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः ।
10 सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम् ॥ ३३३ ॥
सत्यं मित्रैः प्रियं स्त्रीभिरलीकं मधुरं द्विषा ।
अनुकूलं च सत्यं च वक्तव्यं स्वामिना सह ॥ ३३४ ॥
संतप्तायसि संस्थितस्य पयसो नामापि न ज्ञायते
मुक्ताकारतया तदेव नलिनीपत्त्रे स्थितं राजते ।
15 स्वात्यां सागरशुक्तिमध्यपतितं तन्मौक्तिकं जायते
प्रायेणाधममध्यमोत्तमगुणाः संसर्गतो जायते ॥ ३३५ ॥
संपत्तौ कर्कशं चित्तं खलस्यापदि कोमलम् ।
शीतलं कठिनं प्रायस्तप्तं मृदु भवत्ययः ॥ ३३६ ॥
संपत्तौ कोमलं चित्तं साधोरापदि कर्कशम् ।
20 सुकुमारं मधौ पत्त्रं तरोः स्यात्कठिनं शुचौ ॥ ३३७ ॥
सर्वासामपि नारीणां मध्ये श्रीः सुभगा खलु ।
स्पृहयन्ति महान्तो ऽपि यां स्वेच्छाचारिणीमपि ॥ ३३८ ॥
सा दृष्टा यैर्न वा दृष्टा मुषिताः सममेव ते ।
हृदयं हृतमेकेषामन्येषां चक्षुषोः फलम् ॥ ३३९ ॥
25 सुखमापतितं सेवेद्दुःखमापतितं वहेत् ।
कालप्राप्तमुपासीत सस्यानामिव कर्षकः ॥ ३४० ॥
सैव भूमिस्तदेवाम्भः पश्य पात्रविशेषतः ।
आम्रे मधुरतामेति कटुत्वं निम्बपादपे ॥ ३४१ ॥
स्मरन्ति सुकृतान्येव न वैराणि कृतान्यपि ।
30 सन्तः परार्थं कुर्वाणा नावेक्षन्ते प्रतिक्रियाम् ॥ ३४२ ॥
स्मर्तव्यो ऽहं त्वया काले न स्मरिष्याम्यहं तव ।
स्मरणं चेतसो धर्मस्तच्चेतो भवता हृतम् ॥ ३४३ ॥

स्वगुणं परदोषं च वक्तुं प्रार्थयितुं परम् ।
अर्थिनं च निराकर्तुं सतां जिह्वा जडायते ॥ ३४४ ॥
स्वपरप्रतारको ऽसौ निन्दति यो ऽलीकपण्डितो युवतीः ।
यस्मात्तपसो ऽपि फलं स्वर्गः स्वर्गे ऽपि च स्त्रियो ऽप्सरसः ॥ ३४५ ॥
5 स्वायत्तमेकान्तहितं विधात्रा विनिर्मितं छादनमज्ञतायाः ।
विशेषतः सर्वविदां समाजे विभूषणं मौनमपण्डितानाम् ॥ ३४६ ॥
हसन्तं प्रहसन्त्येता रुदन्तं प्ररुदन्ति च ।
अप्रियं प्रियवाक्यैश्च गृह्णते कालयोगतः ॥ ३४७ ॥
हारो नारोपितः कण्ठे मया विश्लेषभीरुणा ।
10 इदानीमावयोर्मध्ये सरित्सागरभूधराः ॥ ३४८ ॥
हृदयानि सतामेव कठिनानीति मे मतिः ।
खलवाग्विशिखैस्तीक्ष्णैर्भिद्यन्ते न मनाग्यतः ॥ ३४९ ॥

---

## XIII. GÎTAGOVINDA 9, 1—10.

अथ तां मन्मथखिन्नां रतिरसभिन्नां विषादसंपन्नाम् ।
अनुचिन्तितहरिचरितां कलहान्तरितामुवाच रहः सखी ॥ १ ॥
15 हरिरभिसरति वहति मधुपवने । किमपरमधिकसुखं सखि भवने ।
माधवे मा कुरु मानिनि मानमये ॥ २ ॥
तालफलादपि गुरुमतिसरसम् । किं विफलीकुरुषे कुचकलशम् ।
माधवे मा कुरु मानिनि मानमये ॥ ३ ॥
कति न कथितमिदमनुपदमचिरम् । मा परिहर हरिमतिशयरुचिरम् ।
20 माधवे मा कुरु मानिनि मानमये ॥ ४ ॥
किमिति विषीदसि रोदिषि विकला । विहसति युवतिसभा तव सकला ।
माधवे मा कुरु मानिनि मानमये ॥ ५ ॥
सजलनलिनदलशीलितशयने । हरिमवलोकय सफलय नयने ।
माधवे मा कुरु मानिनि मानमये ॥ ६ ॥
25 जनयसि मनसि किमिति गुरुखेदम् । शृणु मम वचनमनीहितभेदम् ।
माधवे मा कुरु मानिनि मानमये ॥ ७ ॥
हरिरुपयातु वदतु बहु मधुरम् । किमिति करोषि हृदयमतिविधुरम् ।
माधवे मा कुरु मानिनि मानमये ॥ ८ ॥

श्रीजयदेवभणितमतिललितम्। सुखयतु रसिकजनं हरिचरितम्।
माधवे मा कुरु मानिनि मानमये ॥ ६ ॥
स्निग्धे यत्परुषासि यत्प्रणमति स्तब्धासि यद्रागिणि
द्वेषस्थासि यदुन्मुखे विमुखतां यातासि तस्मिन्प्रिये।
5 तद्युक्तं विपरीतकारिणि तव श्रीखण्डचर्चा विषं
शीतांशुस्तपनो हिमं हुतवहः क्रीडामुदो यातनाः ॥ १० ॥

---

## XIV. Mânava Dharmaçâstra 9.

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः।
संयोगे विप्रयोगे च धर्मान्वक्ष्यामि शाश्वतान् ॥ १ ॥
अस्वतन्त्राः स्त्रियः कार्याः पुरुषैः स्वैर्दिवानिशम्।
10 विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो वशे ॥ २ ॥
पिता रक्षति कौमारे भर्ता रक्षति यौवने।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥ ३ ॥
काले ऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः।
मृते भर्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥ ४ ॥
15 सूक्ष्मेभ्यो ऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः ॥ ५ ॥
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम्।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥ ६ ॥
स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च।
20 स्वं च धर्मं प्रयत्नेन जायां रक्षन्हि रक्षति ॥ ७ ॥
पतिर्भार्यां संप्रविश्य गर्भो भूत्वेह जायते।
जायायास्तद्धि जायात्वं यदस्यां जायते पुनः ॥ ८ ॥
यादृशं भजते हि स्त्री सुतं सूते तथाविधम्।
तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत्प्रयत्नतः ॥ ९ ॥
25 न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥ १० ॥
अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्।
शौचे धर्मे ऽन्नपक्त्यां च पारिणाह्यस्य वेक्षणे ॥ ११ ॥

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥ १२ ॥
पानं दुर्जनसंसर्गः पत्या च विरहो ऽटनम् ।
स्वप्नो ऽन्यगेहवासश्च नारीसंदूषणानि षट् ॥ १३ ॥
5 नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः ।
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥ १४ ॥
पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतो ऽपीह भर्तृष्वेता विकुर्वते ॥ १५ ॥
एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
10 परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥ १६ ॥
शय्यासनमलंकारं कामं क्रोधमनार्जवम् ।
द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥ १७ ॥
नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्मो व्यवस्थितः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियो ऽनृतमिति स्थितिः ॥ १८ ॥
15 तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि ।
स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः ॥ १९ ॥
यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ।
तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम् ॥ २० ॥
ध्यायत्यनिष्टं यत्किंचित्पाणिग्राहस्य चेतसा ।
20 तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते ॥ २१ ॥
यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ २२ ॥
अक्षमाला वसिष्ठेन संयुक्ताधमयोनिजा ।
शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम् ॥ २३ ॥
25 एताश्चान्याश्च लोके ऽस्मिन्नपकृष्टप्रसूतयः ।
उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैः शुभैः ॥ २४ ॥
एषोदिता लोकयात्रा नित्यं स्त्रीपुंसयोः शुभा ।
प्रेत्येह च सुखोदर्कान्प्रजाधर्मान्निबोधत ॥ २५ ॥
प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
30 स्त्रियः श्रियश्च गेहेषु न विशेषो ऽस्ति कश्चन ॥ २६ ॥
उत्पादनमपत्यस्य जातस्य परिपालनम् ।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥ २७ ॥

अपत्यं धर्मकार्याणि शुश्रूषा रतिरुत्तमा ।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥ २८ ॥
पतिं या नाभिचरति मनोवाग्देहसंयता ।
सा भर्तृलोकानाप्नोति सद्भिः साध्वीति चोच्यते ॥ २९ ॥
5 व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
सृगालयोनिं चाप्नोति पापरोगैश्च पीड्यते ॥ ३० ॥
पुत्रं प्रत्युदितं सद्भिः पूर्वजैश्च महर्षिभिः ।
विश्वजन्यमिमं पुण्यमुपन्यासं निबोधत ॥ ३१ ॥
भर्तुः पुत्रं विजानन्ति श्रुतिद्वैधं तु भर्तरि ।
10 आहुरुत्पादकं केचिदपरे क्षेत्रिणं विदुः ॥ ३२ ॥
क्षेत्रभूता स्मृता नारी बीजभूतः स्मृतः पुमान् ।
क्षेत्रबीजसमायोगात्संभवः सर्वदेहिनाम् ॥ ३३ ॥
विशिष्टं कुत्र चिद्बीजं स्त्रीयोनिस्त्वेव कुत्र चित् ।
उभयं तु समं यत्र सा प्रसूतिः प्रशस्यते ॥ ३४ ॥
15 बीजस्य चैव योन्याश्च बीजमुत्कृष्टमुच्यते ।
सर्वभूतप्रसूतिर्हि बीजलक्षणलक्षिता ॥ ३५ ॥
यादृशं तूप्यते बीजं क्षेत्रे कालोपपादिते ।
तादृग्रोहति तत्तस्मिन्बीजं स्वैर्व्यञ्जितं गुणैः ॥ ३६ ॥
इयं भूमिर्हि भूतानां शाश्वती योनिरुच्यते ।
20 न च योनिगुणान्कांश्चिद्बीजं पुष्यति पुष्टिषु ॥ ३७ ॥
भूमावप्येककेदारे कालोप्तानि कृषीवलैः ।
नानारूपाणि जायन्ते बीजानीह स्वभावतः ॥ ३८ ॥
व्रीहयः शालयो मुद्गास्तिला माषास्तथा यवाः ।
यथाबीजं प्ररोहन्ति लशुनानीक्षवस्तथा ॥ ३९ ॥
25 अन्यदुप्तं जातमन्यदित्येतन्नोपपद्यते ।
उप्यते यद्धि यद्बीजं तत्तदेव प्ररोहति ॥ ४० ॥
तत्प्राज्ञेन विनीतेन ज्ञानविज्ञानवेदिना ।
आयुष्कामेन वप्तव्यं न जातु परयोषिति ॥ ४१ ॥
अत्र गाथा वायुगीताः कीर्तयन्ति पुराविदः ।
30 यथा बीजं न वप्तव्यं पुंसा परपरिग्रहे ॥ ४२ ॥
नश्यतीषुर्यथा क्षिप्तः खे विद्धमनुविध्यतः ।
तथा नश्यति वै क्षिप्तं बीजं परपरिग्रहे ॥ ४३ ॥

पृथोरपीमां पृथिवीं भार्यां पूर्वविदो विदुः ।
स्थाणुच्छेदस्य केदारमाहुः शल्यवतो मृगम् ॥ ४४ ॥
एतावानेव पुरुषो यज्जायात्मा प्रजेति ह ।
विप्राः प्राहुस्तथा चैतद्यो भर्ता सा स्मृताङ्गना ॥ ४५ ॥
5 न निष्क्रयविसर्गाभ्यां भर्तुर्भार्या विमुच्यते ।
एवं धर्मं विजानीमः प्राक्प्रजापतिनिर्मितम् ॥ ४६ ॥
सकृदंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सतां सकृत् ॥ ४७ ॥
यथा गोऽश्वोष्ट्रदासीषु महिष्यजाविकासु च ।
10 नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥ ४८ ॥
ये ऽक्षेत्रिणो बीजवन्तः परक्षेत्रप्रवापिणः ।
ते वै सस्यस्य जातस्य न लभन्ते फलं क्व चित् ॥ ४९ ॥
यदन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।
गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम् ॥ ५० ॥
15 तथैवाक्षेत्रिणो बीजं परक्षेत्रप्रवापिणः ।
कुर्वन्ति क्षेत्रिणामर्थं न बीजी लभते फलम् ॥ ५१ ॥
फलं त्वनभिसंधाय क्षेत्रिणां बीजिनां तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो बीजाद्योनिर्गरीयसी ॥ ५२ ॥
क्रियाभ्युपगमात्त्वेतद्बीजार्थं यत्प्रदीयते ।
20 तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥ ५३ ॥
ओघवाताहृतं बीजं यस्य क्षेत्रे प्ररोहति ।
क्षेत्रिकस्यैव तद्बीजं न वप्ता लभते फलम् ॥ ५४ ॥
एष धर्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च ।
विहंगमहिषीणां च विज्ञेयः प्रसवं प्रति ॥ ५५ ॥
25 एतद्वः सारफल्गुत्वं बीजयोन्योः प्रकीर्तितम् ।
अतः परं प्रवक्ष्यामि योषितां धर्ममापदि ॥ ५६ ॥
भ्रातुर्ज्येष्ठस्य भार्या या गुरुपत्न्यनुजस्य सा ।
यवीयसस्तु या भार्या स्नुषा ज्येष्ठस्य सा स्मृता ॥ ५७ ॥
ज्येष्ठो यवीयसो भार्यां यवीयान्वाग्रजस्त्रियम् ।
30 पतितौ भवतो गत्वा नियुक्तावप्यनापदि ॥ ५८ ॥
देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया ।
प्रजेप्सिताधिगन्तव्या संतानस्य परिक्षये ॥ ५९ ॥

विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि ।
एकमुत्पादयेत्पुत्रं न द्वितीयं कथं चन ॥ ६० ॥
द्वितीयमेके प्रजनं मन्यन्ते स्त्रीषु तद्विदः ।
अनिर्वृत्तं नियोगार्थं पश्यन्तो धर्मतस्तयोः ॥ ६१ ॥
5 विधवायां नियोगार्थे निर्वृत्ते तु यथाविधि ।
गुरुवच्च स्नुषावच्च वर्तेयातां परस्परम् ॥ ६२ ॥
नियुक्तौ यौ विधिं हित्वा वर्तेयातां तु कामतः ।
तावुभौ पतितौ स्यातां स्नुषागगुरुतल्पगौ ॥ ६३ ॥
नान्यस्मिन्विधवा नारी नियोक्तव्या द्विजातिभिः ।
10 अन्यस्मिन्हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥ ६४ ॥
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्व चित् ।
न विवाहविधावुक्तं विधवावेदनं पुनः ॥ ६५ ॥
अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।
मनुष्याणामपि प्रोक्तो वेने राज्यं प्रशासति ॥ ६६ ॥
15 स महीमखिलां भुञ्जन्राजर्षिप्रवरः पुरा ।
वर्णानां संकरं चक्रे कामोपहतचेतनः ॥ ६७ ॥
ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम् ।
नियोजयत्यपत्यार्थं तं विगर्हन्ति साधवः ॥ ६८ ॥
यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः ।
20 तामनेन विधानेन निजो विन्देत देवरः ॥ ६९ ॥
यथाविध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।
मिथो भजेता प्रसवात्सकृत्सकृदृतावृतौ ॥ ७० ॥
न दत्त्वा कस्य चित्कन्यां पुनर्दद्याद्विचक्षणः ।
दत्त्वा पुनः प्रयच्छन्हि प्राप्नोति पुरुषानृतम् ॥ ७१ ॥
25 विधिवत्प्रतिगृह्यापि त्यजेत्कन्यां विगर्हिताम् ।
व्याधितां विप्रदुष्टां वा छद्मना चोपपादिताम् ॥ ७२ ॥
यस्तु दोषवतीं कन्यामनाख्यायोपपादयेत् ।
तस्य तद्वितथं कुर्यात्कन्यादातुर्दुरात्मनः ॥ ७३ ॥
विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः ।
30 अवृत्तिकर्षिता हि स्त्री प्रदुष्येत्स्थितिमत्यपि ॥ ७४ ॥
विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥ ७५ ॥

प्रोषितो धर्मकार्यार्थं प्रतीक्ष्योऽष्टौ नरः समाः ।
विद्यार्थं षड्यशोऽर्थं वा कामार्थं त्रींस्तु वत्सरान् ॥ ७६ ॥
संवत्सरं प्रतीक्षेत द्विषन्तीं योषितं पतिः ।
ऊर्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत् ॥ ७७ ॥
5 अतिक्रामेत्प्रमत्तं या मत्तं रोगार्तमेव वा ।
सा त्रीन्मासान्परित्याज्या विभूषणपरिच्छदा ॥ ७८ ॥
उन्मत्तं पतितं क्लीबमबीजं पापरोगिणम् ।
न त्यागोऽस्ति द्विषन्त्याश्च न च दायापवर्तनम् ॥ ७९ ॥
मद्यपासाधुवृत्ता च प्रतिकूला च या भवेत् ।
10 व्याधिता वाधिवेत्तव्या हिंस्रार्थघ्नी च सर्वदा ॥ ८० ॥
वन्ध्याष्टमेऽधिवेद्याब्दे दशमे तु मृतप्रजा ।
एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥ ८१ ॥
या रोगिणी स्यात्तु हिता संपन्ना चैव शीलतः ।
सानुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हि चित् ॥ ८२ ॥
15 अधिविन्ना तु या नारी निर्गच्छेद्रुषिता गृहात् ।
सा सद्यः संनिरोद्धव्या त्याज्या वा कुलसंनिधौ ॥ ८३ ॥
प्रतिषिद्धा पिबेद्या तु मद्यमभ्युदयेष्वपि ।
प्रेक्षासमाजं गच्छेद्वा सा दण्ड्या कृष्णलानि षट् ॥ ८४ ॥
यदि स्वाश्चापराश्चैव विन्देरन्योषितो द्विजाः ।
20 तासां वर्णक्रमेण स्याज्ज्यैष्ठ्यं पूजा च वेश्म च ॥ ८५ ॥
भर्तुः शरीरशुश्रूषां धर्मकार्यं च नैत्यिकम् ।
स्वा चैव कुर्यात्सर्वेषां नासजातिः कथं चन ॥ ८६ ॥
यस्तु तत्कारयेन्मोहात्सजात्या स्थितयान्यया ।
यथा ब्राह्मणचाण्डालः पूर्वदृष्टस्तथैव सः ॥ ८७ ॥
25 उत्कृष्टायाभिरूपाय वराय सदृशाय च ।
अप्राप्तामपि तां तस्मै कन्यां दद्याद्यथाविधि ॥ ८८ ॥
काममा मरणात्तिष्ठेद्गृहे कन्यर्तुमत्यपि ।
न चैवैनां प्रयच्छेत्तु गुणहीनाय कर्हि चित् ॥ ८९ ॥
त्रीणि वर्षाण्युदीक्षेत कुमार्यृतुमती सती ।
30 ऊर्ध्वं तु कालादेतस्माद्विन्देत सदृशं पतिम् ॥ ९० ॥
अदीयमाना भर्तारमधिगच्छेद्यदि स्वयम् ।
नैनः किं चिदवाप्नोति न च यं साधिगच्छति ॥ ९१ ॥

अलंकारं नाददीत पित्र्यं कन्या स्वयंवरा ।<br>
मातृकं भ्रातृदत्तं वा स्तेना स्याद्यदि तं हरेत् ॥ ९२ ॥<br>
पित्रे न दद्याच्छुल्कं तु कन्यामृतुमतीं हरन् ।<br>
स हि स्वाम्यादतिक्रामेदृतूनां प्रतिरोधनात् ॥ ९३ ॥<br>
5 त्रिंशद्वर्षो वहेत्कन्यां हृद्यां द्वादशवार्षिकीम् ।<br>
त्र्यष्टवर्षो ऽष्टवर्षां वा धर्मे सीदति सत्वरः ॥ ९४ ॥<br>
देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः ।<br>
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥ ९५ ॥<br>
प्रजनार्थं स्त्रियः सृष्टाः संतानार्थं च मानवाः ।<br>
10 तस्मात्साधारणो धर्मः श्रुतौ पत्न्या सहोदितः ॥ ९६ ॥<br>
कन्यायां दत्तशुल्कायां म्रियेत यदि शुल्कदः ।<br>
देवराय प्रदातव्या यदि कन्यानुमन्यते ॥ ९७ ॥<br>
आददीत न शूद्रो ऽपि शुल्कं दुहितरं ददत् ।<br>
शुल्कं हि गृह्णन्कुरुते छन्नं दुहितृविक्रयम् ॥ ९८ ॥<br>
15 एतत्तु न परे चक्रुर्नापरे जातु साधवः ।<br>
यदन्यस्य प्रतिज्ञाय पुनरन्यस्य दीयते ॥ ९९ ॥<br>
नानुशुश्रुम जात्वेतत्पूर्वेष्वपि हि जन्मसु ।<br>
शुल्कसंज्ञेन मूल्येन छन्नं दुहितृविक्रयम् ॥ १०० ॥<br>
अन्योऽन्यस्याव्यभीचारो भवेदामरणान्तिकः ।<br>
20 एष धर्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥ १०१ ॥<br>
तथा नित्यं यतेयातां स्त्रीपुंसौ तु कृतक्रियौ ।<br>
यथा नाभिचरेतां तौ वियुक्तावितरेतरम् ॥ १०२ ॥<br>
एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंहितः ।<br>
आपद्यपत्यप्राप्तिश्च दायभागं निबोधत ॥ १०३ ॥<br>
25 ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम् ।<br>
भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥ १०४ ॥<br>
ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः ।<br>
शेषास्तमुपजीवेयुर्यथैव पितरं तथा ॥ १०५ ॥<br>
ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः ।<br>
30 पितॄणामनृणश्चैव स तस्मात्सर्वमर्हति ॥ १०६ ॥<br>
यस्मिन्नृणं संनयति येन चानन्त्यमश्नुते ।<br>
स एव धर्मजः पुत्रः कामजानितरान्विदुः ॥ १०७ ॥

पितेव पालयेत्पुत्राञ्ज्येष्ठो भ्रातॄन्यवीयसः ।
पुत्रवच्चापि वर्तेरञ्ज्येष्ठे भ्रातरि धर्मतः ॥ १०८ ॥
ज्येष्ठः कुलं वर्धयति विनाशयति वा पुनः ।
ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः ॥ १०९ ॥
5 यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः ।
अज्येष्ठवृत्तिर्यस्तु स्यात्स संपूज्यस्तु बन्धुवत् ॥ ११० ॥
एवं सह वसेयुर्वा पृथग्वा धर्मकाम्यया ।
पृथग्विवर्धते धर्मस्तस्माद्धर्म्या पृथक्क्रिया ॥ १११ ॥
ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम् ।
10 ततो ऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥ ११२ ॥
ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम् ।
ये ऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमं धनम् ॥ ११३ ॥
सर्वेषां धनजातानामाददीताग्र्यमग्रजः ।
यच्च सातिशयं किं चिद्दशतश्चाप्नुयाद्वरम् ॥ ११४ ॥
15 उद्धारो न दशस्वस्ति संपन्नानां स्वकर्मसु ।
यत्किं चिदेव देयं तु ज्यायसे मानवर्धनम् ॥ ११५ ॥
एवं समुद्धृतोद्धारे समानंशान्प्रकल्पयेत् ।
उद्धारे ऽनुद्धृते त्वेषामियं स्यादंशकल्पना ॥ ११६ ॥
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततो ऽनुजः ।
20 अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ॥ ११७ ॥
स्वेभ्यो ऽंशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।
स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥ ११८ ॥
अजाविकं सैकशफं न जातु विषमं भजेत् ।
अजाविकं तु विषमं ज्येष्ठस्यैव विधीयते ॥ ११९ ॥
25 यवीयाञ्ज्येष्ठभार्यायां पुत्रमुत्पादयेद्यदि ।
समस्तत्र विभागः स्यादिति धर्मो व्यवस्थितः ॥ १२० ॥
उपसर्जनं प्रधानस्य धर्मतो नोपपद्यते ।
पिता प्रधानं प्रजने तस्माद्धर्मेण तं भजेत् ॥ १२१ ॥
पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायां च पूर्वजः ।
30 कथं तत्र विभागः स्यादिति चेत्संशयो भवेत् ॥ १२२ ॥
एकं वृषभमुद्धारं संहरेत स पूर्वजः ।
ततो ऽपरे ऽज्येष्ठवृषास्तदूनानां स्वमातृतः ॥ १२३ ॥

ज्येष्ठस्तु जातो ज्येष्ठायां हरेदृषभषोडशाः ।
ततः स्वमातृतः शेषा भजेरन्निति धारणा ॥ १२४ ॥
सदृशस्त्रीषु जातानां पुत्राणामविशेषतः ।
न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते ॥ १२५ ॥
5 जन्मज्येष्ठेन चाह्वानं सुब्रह्मण्यास्वपि स्मृतम् ।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता स्मृता ॥ १२६ ॥
अपुत्रो ऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥ १२७ ॥
अनेन तु विधानेन पुरा चक्रे ऽथ पुत्रिकाः ।
10 विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः ॥ १२८ ॥
ददौ स दश धर्माय कश्यपाय त्रयोदश ।
सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥ १२९ ॥
यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा ।
तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥ १३० ॥
15 मातुस्तु यौतकं यत्स्यात्कुमारीभाग एव सः ।
दौहित्र एव च हरेदपुत्रस्याखिलं धनम् ॥ १३१ ॥
दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥ १३२ ॥
पौत्रदौहित्रयोर्लोके न विशेषो ऽस्ति धर्मतः ।
20 तयोर्हि मातापितरौ संभूतौ तस्य देहतः ॥ १३३ ॥
पुत्रिकायां कृतायां तु यदि पुत्रो ऽनुजायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥ १३४ ॥
अपुत्रायां मृतायां तु पुत्रिकायां कथं चन ।
धनं तत्पुत्रिकाभर्ता हरेतैवाविचारयन् ॥ १३५ ॥
25 अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् ।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥ १३६ ॥
पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते ।
अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम् ॥ १३७ ॥
पुन्नाम्नो नरकाद्यस्मात्त्रायते पितरं सुतः ।
30 तस्मात्पुत्र (पुत्त्र) इति प्रोक्तः स्वयमेव स्वयंभुवा ॥ १३८ ॥
पौत्रदौहित्रयोर्लोके विशेषो नोपपद्यते ।
दौहित्रो ऽपि ह्यमुत्रैनं संतारयति पौत्रवत् ॥ १३९ ॥

मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ।
द्वितीयं तु पितुस्तस्यास्तृतीयं तत्पितुः पितुः ॥ १४० ॥
उपपन्नो गुणैः सर्वैः पुत्रो यस्य तु दत्त्रिमः ।
स हरेतैव तद्रिक्थं संप्राप्तो ऽप्यन्यगोत्रतः ॥ १४१ ॥
5 गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः क्व चित् ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥ १४२ ॥
अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात् ।
उभौ तौ नार्हतो भागं जारजातककामजौ ॥ १४३ ॥
नियुक्तायामपि पुमान्नार्यां जातो ऽविधानतः ।
10 नैवार्हः पैतृकं रिक्थं पतितोत्पादितो हि सः ॥ १४४ ॥
हरेत्तत्र नियुक्तायां जातः पुत्रो यथौरसः ।
क्षेत्रिकस्य तु तद्बीजं धर्मतः प्रसवश्च सः ॥ १४५ ॥
धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव च ।
सो ऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥ १४६ ॥
15 या नियुक्तान्यतः पुत्रं देवराद्वाप्यवाप्नुयात् ।
तं कामजमरिक्थीयं वृथोत्पन्नं प्रचक्षते ॥ १४७ ॥
एतद्विधानं विज्ञेयं विभागस्यैकयोनिषु ।
बह्वीषु चैकजातानां नानास्त्रीषु निबोधत ॥ १४८ ॥
ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदि स्त्रियः ।
20 तासां पुत्रेषु जातेषु विभागे ऽयं विधिः स्मृतः ॥ १४९ ॥
कीनाशो गोवृषो यानमलंकारश्च वेश्म च ।
विप्रस्यौद्धारिकं देयमेकांशश्च प्रधानतः ॥ १५० ॥
त्र्यंशं दायाद्धरेद्विप्रो द्वावंशौ क्षत्रियासुतः ।
वैश्याजः सार्धमेवांशमंशं शूद्रासुतो हरेत् ॥ १५१ ॥
25 सर्वं वा रिक्थजातं तु दशधा परिकल्प्य च ।
धर्म्यं विभागं कुर्वीत विधिनानेन धर्मवित् ॥ १५२ ॥
चतुरो ऽंशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ।
वैश्यापुत्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेत् ॥ १५३ ॥
यद्यपि स्यात्तु सत्पुत्रो ऽप्यसत्पुत्रो ऽपि वा भवेत् ।
30 नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्मतः ॥ १५४ ॥
ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न रिक्थभाक् ।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत् ॥ १५५ ॥

समवर्णासु ये जाताः सर्वे पुत्रा द्विजन्मनाम् ।
उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे समम् ॥ १५६ ॥
शूद्रस्य तु सवर्णैव नान्या भार्या विधीयते ।
तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत् ॥ १५७ ॥
5 पुत्रान्द्वादश यानाह नृणां स्वायंभुवो मनुः ।
तेषां षड्बन्धुदायादाः षडदायादबान्धवाः ॥ १५८ ॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च ।
गूढोत्पन्नोऽपविद्धश्च दायादा बान्धवाश्च षट् ॥ १५९ ॥
कानीनश्च सहोढश्च क्रीतः पौनर्भवस्तथा ।
10 स्वयंदत्तश्च शौद्रश्च षडदायादबान्धवाः ॥ १६० ॥
यादृशं फलमाप्नोति कुप्लवैः संतरञ्जलम् ।
तादृशं फलमाप्नोति कुपुत्रैः संतरंस्तमः ॥ १६१ ॥
यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ ।
यस्य यत्पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥ १६२ ॥
15 एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।
शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥ १६३ ॥
षष्ठं तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात् ।
औरसो विभजन्दायं पित्र्यं पञ्चममेव वा ॥ १६४ ॥
औरसक्षेत्रजौ पुत्रौ पितृरिक्थस्य भागिनौ ।
20 दशापरे तु क्रमशो गोत्ररिक्थांशभागिनः ॥ १६५ ॥
स्वे क्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम् ।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम् ॥ १६६ ॥
यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा ।
स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः ॥ १६७ ॥
25 माता पिता वा दद्यातां यमद्भिः पुत्रमापदि ।
सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥ १६८ ॥
सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः ॥ १६९ ॥
उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।
30 स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥ १७० ॥
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते ॥ १७१ ॥

पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥ १७२ ॥
या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती ।
वोढुः स गर्भो भवति सहोढ इति चोच्यते ॥ १७३ ॥
5 क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशो ऽसदृशो ऽपि वा ॥ १७४ ॥
या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥ १७५ ॥
सा चेदक्षतयोनिः स्यादुतप्रत्यागतापि वा ।
10 पौनर्भवेन भर्त्रा सा पुनः संस्कारमर्हति ॥ १७६ ॥
मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयंदत्तस्तु स स्मृतः ॥ १७७ ॥
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पारयन्नेव शवस्तस्मात्पारशवः स्मृतः ॥ १७८ ॥
15 दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् ।
सो ऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥ १७९ ॥
क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥ १८० ॥
य एते ऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः ।
20 यस्य ते बीजतो जातास्तस्य ते नेतरस्य तु ॥ १८१ ॥
भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥ १८२ ॥
सर्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥ १८३ ॥
25 श्रेयसः श्रेयसो ऽभावे पापीयान्रिक्थमर्हति ।
बहवश्चेत्तु सदृशाः सर्वे रिक्थस्य भागिनः ॥ १८४ ॥
न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।
पिता हरेदपुत्रस्य रिक्थं भ्रातर एव च ॥ १८५ ॥
त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते ।
30 चतुर्थः संप्रदातैषां पञ्चमो नोपपद्यते ॥ १८६ ॥
अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत् ।
अत ऊर्ध्वं सकुल्यः स्यादाचार्यः शिष्य एव वा ॥ १८७ ॥

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥ १८८ ॥
अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः ।
इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः ॥ १८९ ॥
5 संस्थितस्यानपत्यस्य सगोत्रात्पुत्रमाहरेत् ।
तत्र यद्रिक्थजातं स्यात्तत्तस्मिन्प्रतिपादयेत् ॥ १९० ॥
द्वौ तु यौ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने ।
तयोर्यद्यस्य पित्र्यं स्यात्तत्स गृह्णीत नेतरः ॥ १९१ ॥
जनन्यां संस्थितायां तु समं सर्वे सहोदराः ।
10 भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥ १९२ ॥
यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात्किं चित्प्रदेयं प्रीतिपूर्वकम् ॥ १९३ ॥
अध्यग्न्यध्यावाहनिकं दत्तं च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥ १९४ ॥
15 अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत् ॥ १९५ ॥
ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्वसु ।
अप्रजायामतीतायां भर्तुरेव तदिष्यते ॥ १९६ ॥
यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
20 अप्रजायामतीतायां मातापित्रोस्तदिष्यते ॥ १९७ ॥
स्त्रियां तु यद्भवेद्वित्तं पित्रा दत्तं कथं चन ।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥ १९८ ॥
न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् ।
स्वकादपि च वित्ताद्धि स्वस्य भर्तुरनाज्ञया ॥ १९९ ॥
25 पत्यौ जीवति यः स्त्रीभिरलंकारो धृतो भवेत् ।
न तं भजेरन्दायादा भजमानाः पतन्ति ते ॥ २०० ॥
अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च के चिन्निरिन्द्रियाः ॥ २०१ ॥
सर्वेषामपि तु न्याय्यं दातुं शक्त्या मनीषिणा ।
30 ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥ २०२ ॥
यद्यर्थिता तु दारैः स्यात्क्लीबादीनां कथं चन ।
तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥ २०३ ॥

यत्किं चित्पितरि प्रेते धनं ज्येष्ठो ऽधिगच्छति ।
भागो यवीयसां तत्र यदि विद्यानुपालिनः ॥ २०४ ॥
अविद्यानां तु सर्वेषामीहातश्चेद्धनं भवेत् ।
समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥ २०५ ॥
5 विद्याधनं तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥ २०६ ॥
भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्मणा ।
स निर्भाज्यः स्वकादंशात्किं चिद्दत्त्वोपजीवनम् ॥ २०७ ॥
अनुपघ्नन्पितृद्रव्यं श्रमेण यदुपार्जितम् ।
10 स्वयमीहितलब्धं तन्नाकामो दातुमर्हति ॥ २०८ ॥
पैतृकं तु पिता द्रव्यमनवाप्तं यदाप्नुयात् ।
न तत्पुत्रैर्भजेत्सार्धमकामः स्वयमर्जितम् ॥ २०९ ॥
विभक्ताः सह जीवन्तो विभजेरन्पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥ २१० ॥
15 येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥ २११ ॥
सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥ २१२ ॥
यो ज्येष्ठो विनिकुर्वीत लोभाद्भ्रातॄन्यवीयसः ।
20 सो ऽज्येष्ठः स्यादभागश्च नियन्तव्यश्च राजभिः ॥ २१३ ॥
सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ।
न चादत्त्वा कनिष्ठेभ्यो ज्येष्ठः कुर्वीत यौतकम् ॥ २१४ ॥
भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह ।
न पुत्रभागं विषमं पिता दद्यात्कथं चन ॥ २१५ ॥
25 ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम् ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥ २१६ ॥
अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।
मातर्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥ २१७ ॥
ऋणे धने च सर्वस्मिन्प्रविभक्ते यथाविधि ।
30 पश्चाद्दृश्येत यत्किं चित्तत्सर्वं समतां नयेत् ॥ २१८ ॥
वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमं प्रचारं च न विभाज्यं प्रचक्षते ॥ २१९ ॥

अयमुक्तो विभागो वः पुत्राणां च क्रियाविधिः ।
क्रमशः क्षेत्रजादीनां द्यूतधर्मं निबोधत ॥ २२० ॥
द्यूतं समाह्वयं चैव राजा राष्ट्रान्निवारयेत् ।
राज्यान्तकरणावेतौ द्वौ दोषौ पृथिवीक्षिताम् ॥ २२१ ॥
5 प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥ २२२ ॥
अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥ २२३ ॥
द्यूतं समाह्वयं चैव यः कुर्यात्कारयेत वा ।
10 तान्सर्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥ २२४ ॥
कितवान्कुशीलवान्क्रूरान्पाषण्डस्थांश्च मानवान् ।
विकर्मस्थाञ्छौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥ २२५ ॥
एते राष्ट्रे वर्तमाना राज्ञः प्रच्छन्नतस्कराः ।
विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः ॥ २२६ ॥
15 द्यूतमेतत्पुराकल्पे दृष्टं वैरकरं महत् ।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ २२७ ॥
प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ।
तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ॥ २२८ ॥
क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् ।
20 आनृण्यं कर्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः ॥ २२९ ॥
स्त्रीबालोन्मत्तवृद्धानां दरिद्राणां च रोगिणाम् ।
शिफाबिदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥ २३० ॥
ये नियुक्तास्तु कार्येषु हन्युः कार्याणि कार्यिणाम् ।
धनोष्मणा पच्यमानास्तान्निःस्वान्कारयेन्नृपः ॥ २३१ ॥
25 कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा ॥ २३२ ॥
तीरितं चानुशिष्टं च यत्र क्व चन यद्भवेत् ।
कृतं तद्धर्मतो विद्यान्न तद्भूयो निवर्तयेत् ॥ २३३ ॥
अमात्याः प्राड्विवाको वा यत्कुर्युः कार्यमन्यथा ।
30 तत्स्वयं नृपतिः कुर्यात्तान्सहस्रं च दण्डयेत् ॥ २३४ ॥
ब्रह्महा च सुरापश्च स्तेयी च गुरुतल्पगः ।
एते सर्वे पृथग्ज्ञेया महापातकिनो नराः ॥ २३५ ॥

चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्वताम् ।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥ २३६ ॥
गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये च श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥ २३७ ॥
5 असंभोज्या ह्यसंयाज्या असंपाठ्याविवाहिनः ।
चरेयुः पृथिवीं दीनाः सर्वधर्मबहिष्कृताः ॥ २३८ ॥
ज्ञातिसंबन्धिभिस्त्वेते त्यक्तव्याः कृतलक्षणाः ।
निर्दया निर्नमस्कारास्तन्मनोरनुशासनम् ॥ २३९ ॥
प्रायश्चित्तं तु कुर्वाणाः सर्वे वर्णा यथोदितम् ।
10 नाङ्क्या राज्ञा ललाटे स्युर्दाप्यास्तूत्तमसाहसम् ॥ २४० ॥
आगस्सु ब्राह्मणस्यैव कार्यो मध्यमसाहसः ।
विवास्यो वा भवेद्राष्ट्रात्सद्रव्यः सपरिच्छदः ॥ २४१ ॥
इतरे कृतवन्तस्तु पापान्येतान्यकामतः ।
सर्वस्वहारमर्हन्ति कामतस्तु प्रवासनम् ॥ २४२ ॥
15 नाददीत नृपः साधुर्महापातकिनो धनम् ।
आददानस्तु तल्लोभात्तेन दोषेण लिप्यते ॥ २४३ ॥
अप्सु प्रवेश्य तं दण्डं वरुणायोपपादयेत् ।
श्रुतवृत्तोपपन्ने वा ब्राह्मणे प्रतिपादयेत् ॥ २४४ ॥
ईशो दण्डस्य वरुणो राज्ञां दण्डधरो हि सः ।
20 ईशः सर्वस्य जगतो ब्राह्मणो वेदपारगः ॥ २४५ ॥
यत्र वर्जयते राजा पापकृद्भ्यो धनागमम् ।
तत्र कालेन जायन्ते मानवा दीर्घजीविनः ॥ २४६ ॥
निष्पद्यन्ते च सस्यानि यथोप्तानि विशां पृथक् ।
बालाश्च न प्रमीयन्ते विकृतं न च जायते ॥ २४७ ॥
25 ब्राह्मणान्बाधमानं तु कामादवरवर्णजम् ।
हन्याच्चित्रैर्वधोपायैरुद्वेजनकरैर्नृपः ॥ २४८ ॥
यावानवध्यस्य वधे तावान्वध्यस्य मोक्षणे ।
अधर्मो नृपतेर्दृष्टो धर्मस्तु विनियच्छतः ॥ २४९ ॥
उदितो ऽयं विस्तरशो मिथो विवदमानयोः ।
30 अष्टादशसु मार्गेषु व्यवहारस्य निर्णयः ॥ २५० ॥
एवं धर्म्याणि कार्याणि सम्यक्कुर्वन्महीपतिः ।
देशानलब्धाँल्लिप्सेत लब्धांश्च परिपालयेत् ॥ २५१ ॥

सम्यङ्निविष्टदेशस्तु कृतदुर्गश्च शास्त्रतः ।
कण्टकोद्धरणे नित्यमातिष्ठेद्यत्नमुत्तमम् ॥ २५२ ॥
रक्षणादार्यवृत्तानां कण्टकानां च शोधनात् ।
नरेन्द्रास्त्रिदिवं यान्ति प्रजापालनतत्पराः ॥ २५३ ॥
5 अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः ।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥ २५४ ॥
निर्भयं तु भवेद्यस्य राष्ट्रं बाहुबलाश्रितम् ।
तस्य तद्वर्धते नित्यं सिच्यमान इव द्रुमः ॥ २५५ ॥
द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारकान् ।
10 प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥ २५६ ॥
प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः ।
प्रच्छन्नवञ्चकास्त्वेते ये स्तेनाटविकादयः ॥ २५७ ॥
उत्कोचकाश्चौपधिका वञ्चकाः कितवास्तथा ।
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ॥ २५८ ॥
15 असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः ।
शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः ॥ २५९ ॥
एवमादीन्विजानीयात्प्रकाशाँल्लोककण्टकान् ।
निगूढचारिणश्चान्याननार्यानार्यलिङ्गिनः ॥ २६० ॥
तान्विदित्वा सुचरितैर्गूढैस्तत्कर्मकारिभिः ।
20 चारैश्चानेकसंस्थानैः प्रोत्साद्य वशमानयेत् ॥ २६१ ॥
तेषां दोषानभिख्याप्य स्वे स्वे कर्मणि तत्त्वतः ।
कुर्वीत शासनं राजा सम्यक्सारापराधतः ॥ २६२ ॥
नहि दण्डादृते शक्यः कर्तुं पापविनिग्रहः ।
स्तेनानां पापबुद्धीनां निभृतं चरतां क्षितौ ॥ २६३ ॥
25 सभाप्रपापूपशाला वेशमद्यान्नविक्रयाः ।
चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च ॥ २६४ ॥
जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च ।
शून्यानि चाप्यगाराणि वनान्युपवनानि च ॥ २६५ ॥
एवंविधान्नृपो देशान्गुल्मैः स्थावरजङ्गमैः ।
30 तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ॥ २६६ ॥
तत्सहायैरनुगतैर्नानाकर्मप्रवेदिभिः ।
विद्यादुत्सादयेच्चैव निपुणैः पूर्वतस्करैः ॥ २६७ ॥

भक्ष्यभोज्यापदेशैश्च ब्राह्मणानां च दर्शनैः ।
शौर्यकर्मापदेशैश्च कुर्युस्तेषां समागमम् ॥ २६८ ॥
ये तत्र नोपसर्पेयुर्मूलप्रणिहिताश्च ये ।
तान्प्रसह्य नृपो हन्यात्समित्रज्ञातिबान्धवान् ॥ २६९ ॥
5 न होढेन विना चौरं घातयेद्धार्मिको नृपः ।
सहोढं सोपकरणं घातयेदविचारयन् ॥ २७० ॥
ग्रामेष्वपि च ये के चिच्चौराणां भक्तदायकाः ।
भाण्डावकाशदाश्चैव सर्वांस्तानपि घातयेत् ॥ २७१ ॥
राष्ट्रेषु रक्षाधिकृतान्सामन्तांश्चैव चोदितान् ।
10 अभ्याघातेषु मध्यस्थाञ्छिष्याच्चौरानिव द्रुतम् ॥ २७२ ॥
यश्चापि धर्मसमयात्प्रच्युतो धर्मजीवनः ।
दण्डेनैव तमप्योषेत्स्वकाद्धर्माद्धि विच्युतम् ॥ २७३ ॥
ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने ।
शक्तितो नाभिधावन्तो निर्वास्याः सपरिच्छदाः ॥ २७४ ॥
15 राज्ञः कोशापहर्तॄंश्च प्रतिकूलेषु च स्थितान् ।
घातयेद्विविधैर्दण्डैररीणां चोपजापकान् ॥ २७५ ॥
संधिं छित्त्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत् ॥ २७६ ॥
अङ्गुली ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे ।
20 द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥ २७७ ॥
अग्निदान्भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
संनिधातॄंश्च मोषस्य हन्याच्चौरमिवेश्वरः ॥ २७८ ॥
तडागभेदकं हन्यादप्सु शुद्धवधेन वा ।
तद्वापि प्रतिसंस्कुर्याद्दाप्यस्तूत्तमसाहसम् ॥ २७९ ॥
25 कोष्ठागारायुधागारदेवतागारभेदकान् ।
हस्त्यश्वरथहर्तॄंश्च हन्यादेवाविचारयन् ॥ २८० ॥
यस्तु पूर्वनिविष्टस्य तडागस्योदकं हरेत् ।
आगमं वाप्यपां भिन्द्यात्स दाप्यः पूर्वसाहसम् ॥ २८१ ॥
समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
30 स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥ २८२ ॥
आपद्गतो ऽथ वा वृद्धा गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥ २८३ ॥

चिकित्सकानां सर्वेषां मिथ्या प्रचरतां दमः ।
अमानुषेषु प्रथमो मानुषेषु तु मध्यमः ॥ २८४ ॥
संक्रमध्वजयष्टीनां प्रतिमानां च भेदकः ।
प्रतिकुर्याच्च तत्सर्वं पञ्च दद्याच्छतानि च ॥ २८५ ॥
5 अदूषितानां द्रव्याणां दूषणे भेदने तथा ।
मणीनामपवेधे च दण्डः प्रथमसाहसः ॥ २८६ ॥
समैर्हि विषमं यस्तु चरेद्वै मूल्यतोऽपि वा ।
स प्राप्नुयाद्दमं पूर्वं नरो मध्यममेव वा ॥ २८७ ॥
बन्धनानि च सर्वाणि राजमार्गे निवेशयेत् ।
10 दुःखिता यत्र दृश्येरन्विकृताः पापकारिणः ॥ २८८ ॥
प्राकारस्य च भेत्तारं परिखाणां च पूरकम् ।
द्वाराणां चैव भङ्क्तारं क्षिप्रमेव प्रवासयेत् ॥ २८९ ॥
अभिचारेषु सर्वेषु कर्तव्यो द्विशतो दमः ।
मूलकर्मणि चानाप्तेः कृत्यासु विविधासु च ॥ २९० ॥
15 अबीजविक्रयी चैव बीजोत्कृष्टं तथैव च ।
मर्यादाभेदकश्चैव विकृतं प्राप्नुयाद्वधम् ॥ २९१ ॥
सर्वकण्टकपापिष्ठं हेमकारं तु पार्थिवः ।
प्रवर्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥ २९२ ॥
सीताद्रव्यापहरणे शस्त्राणामौषधस्य च ।
20 कालमासाद्य कार्यं च राजा दण्डं प्रकल्पयेत् ॥ २९३ ॥
स्वाम्यमात्यौ पुरं राष्ट्रं कोशदण्डौ सुहृत्तथा ।
सप्त प्रकृतयो ह्येताः सप्ताङ्गं राज्यमुच्यते ॥ २९४ ॥
सप्तानां प्रकृतीनां तु राज्यस्यासां यथाक्रमम् ।
पूर्वं पूर्वं गुरुतरं जानीयाद्व्यसनं महत् ॥ २९५ ॥
25 सप्ताङ्गस्येह राज्यस्य विष्टब्धस्य त्रिदण्डवत् ।
अन्योऽन्यगुणवैशेष्यान्न किं चिदतिरिच्यते ॥ २९६ ॥
तेषु तेषु तु कृत्येषु तत्तदङ्गं विशिष्यते ।
येन यत्साध्यते कार्यं तत्तस्मिञ्छ्रेष्ठमुच्यते ॥ २९७ ॥
चारेणोत्साहयोगेन क्रिययैव च कर्मणाम् ।
30 स्वशक्तिं परशक्तिं च नित्यं विद्यान्महीपतिः ॥ २९८ ॥
पीडनानि च सर्वाणि व्यसनानि तथैव च ।
आरभेत ततः कार्यं संचिन्त्य गुरुलाघवम् ॥ २९९ ॥

आरभेतैव कर्माणि श्रान्तः श्रान्तः पुनः पुनः ।
कर्माण्यारभमाणं हि पुरुषं श्रीर्निषेवते ॥ ३०० ॥
कृतं त्रेतायुगं चैव द्वापरं कलिरेव च ।
राज्ञो वृत्तानि सर्वाणि राजा हि युगमुच्यते ॥ ३०१ ॥
5 कलिः प्रसुप्तो भवति स जाग्रद्द्वापरं युगम् ।
कर्मस्वभ्युद्यतस्त्रेता विचरंस्तु कृतं युगम् ॥ ३०२ ॥
इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च ।
चन्द्रस्याग्नेः पृथिव्याश्च तेजोवृत्तं नृपश्चरेत् ॥ ३०३ ॥
वार्षिकांश्चतुरो मासान्यथेन्द्रो ऽभिप्रवर्षति ।
10 तथाभिवर्षेत्स्वं राष्ट्रं कामैरिन्द्रव्रतं चरन् ॥ ३०४ ॥
अष्टौ मासान्यथादित्यस्तोयं हरति रश्मिभिः ।
तथा हरेत्करं राष्ट्रान्नित्यमर्कव्रतं हि तत् ॥ ३०५ ॥
प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
तथा चारैः प्रवेष्टव्यं व्रतमेतद्धि मारुतम् ॥ ३०६ ॥
15 यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥ ३०७ ॥
वरुणेन यथा पाशैर्बद्ध एवाभिदृश्यते ।
तथा पापान्निगृह्णीयाद्व्रतमेतद्धि वारुणम् ॥ ३०८ ॥
परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
20 तथा प्रकृतयो यस्मिन्स चान्द्रव्रतिको नृपः ॥ ३०९ ॥
प्रतापयुक्तस्तेजस्वी नित्यं स्यात्पापकर्मसु ।
दुष्टसामन्तहिंस्रश्च तदाग्नेयं व्रतं स्मृतम् ॥ ३१० ॥
यथा सर्वाणि भूतानि धरा धारयते समम् ।
तथा सर्वाणि भूतानि बिभ्रतः पार्थिवं व्रतम् ॥ ३११ ॥
25 एतैरुपायैरन्यैश्च युक्तो नित्यमतन्द्रितः ।
स्तेनान्राजा निगृह्णीयात्स्वराष्ट्रे पर एव च ॥ ३१२ ॥
परामप्यापदं प्राप्तो ब्राह्मणान्न प्रकोपयेत् ।
ते ह्येनं कुपिता हन्युः सद्यः सबलवाहनम् ॥ ३१३ ॥
यैः कृतः सर्वभक्षो ऽग्निरपेयश्च महोदधिः ।
30 क्षयी चाप्यायितः सोमः को न नश्येत्प्रकोप्य तान् ॥ ३१४ ॥
लोकानन्यान्सृजेयुर्ये लोकपालांश्च कोपिताः ।
देवान्कुर्युरदेवांश्च कः क्षिण्वंस्तान्समृध्नुयात् ॥ ३१५ ॥

यानुपाश्रित्य तिष्ठन्ति लोका देवाश्च सर्वदा ।
ब्रह्म चैव धनं येषां को हिंस्यात्ताञ्जिजीविषुः ॥ ३१६ ॥
अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ ३१७ ॥
5 श्मशानेष्वपि तेजस्वी पावको नैव दुष्यति ।
हूयमानश्च यज्ञेषु भूय एवाभिवर्धते ॥ ३१८ ॥
एवं यद्यप्यनिष्टेषु वर्तन्ते सर्वकर्मसु ।
सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं हि तत् ॥ ३१९ ॥
क्षत्रस्यातिप्रवृद्धस्य ब्राह्मणान्प्रति सर्वशः ।
10 ब्रह्मैव संनियन्तृ स्यात्क्षत्रं हि ब्रह्मसंभवम् ॥ ३२० ॥
अद्भ्यो ऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ।
तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ॥ ३२१ ॥
नाब्रह्म क्षत्रमृध्नोति नाक्षत्रं ब्रह्म वर्धते ।
ब्रह्म क्षत्रं च संपृक्तमिह चामुत्र वर्धते ॥ ३२२ ॥
15 दत्त्वा धनं तु विप्रेभ्यः सर्वदण्डसमुत्थितम् ।
पुत्रे राज्यं समासृज्य कुर्वीत प्रायणं रणे ॥ ३२३ ॥
एवं चरन्सदा युक्तो राजधर्मेषु पार्थिवः ।
हितेषु चैव लोकस्य सर्वान्भृत्यान्नियोजयेत् ॥ ३२४ ॥
एषो ऽखिलो कर्मविधिरुक्तो राज्ञः सनातनः ।
20 इमं कर्मविधिं विद्यात्क्रमशो वैश्यशूद्रयोः ॥ ३२५ ॥
वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् ।
वार्तायां नित्ययुक्तः स्यात्पशूनां चैव रक्षणे ॥ ३२६ ॥
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् ।
ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः ॥ ३२७ ॥
25 न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ।
वैश्ये चेच्छति नान्येन रक्षितव्याः कथं चन ॥ ३२८ ॥
मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च ।
गन्धानां च रसानां च विद्यादर्घबलाबलम् ॥ ३२९ ॥
बीजानामुप्तिविच्च स्यात्क्षेत्रदोषगुणस्य च ।
30 मानयोगांश्च जानीयात्तुलायोगांश्च सर्वशः ॥ ३३० ॥
सारासारं च भाण्डानां देशानां च गुणागुणान् ।
लाभालाभं च पण्यानां पशूनां परिवर्धनम् ॥ ३३१ ॥

भृत्यानां च भृतिं विद्याद्भाषाश्च विविधा नृणाम् ।
द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च ॥ ३३२ ॥
धर्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम् ।
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः ॥ ३३३ ॥
5 विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ।
शुश्रूषैव तु शूद्रस्य धर्मो नैःश्रेयसः परः ॥ ३३४ ॥
शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः ।
ब्राह्मणाद्याश्रयो नित्यमुत्कृष्टां जातिमश्नुते ॥ ३३५ ॥
एषो ऽनापदि वर्णानामुक्तः कर्मविधिः शुभः ।
10 आपद्यपि हि यस्तेषां क्रमशस्तं निबोधत ॥ ३३६ ॥

---

## XV. Viǵnâneçvara's Mitâksharâ.

(Zu Jâǵnavalkja 2, 1—6).

श्रीगणेशाय नमः । अभिषेकादिगुणयुक्तस्य राज्ञः प्रजापालनं परमो धर्मः । तच्च दुष्टनिग्रहमन्तरेण न संभवति । दुष्टपरिज्ञानं च न व्यवहारदर्शनेन विना । इति व्यवहारदर्शनमहरहः कर्तव्यम् । इत्युक्तम् ।

व्यवहारान्स्वयं पश्येत्सभ्यैः परिवृतो ऽन्वहम् । Jâǵn. 1, 359, *b*.

15 इति । स च व्यवहारः कीदृशः कतिविधः कथं चेतीतिकर्तव्यताकलापो नाभिहितः । तदभिधानाय द्वितीयो ऽध्याय आरभ्यते ।

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैः सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥ Jâǵn. 2, 1.

व्यवहारानिति । अन्यविरोधेन स्वात्मसंबन्धितया कथनं व्यवहारः । यथा । कश्चि-
20 दिदं क्षेत्रादि मदीयमिति कथयति । अन्यो ऽपि तद्विरोधेन मदीयमिति । तस्यानेकविधत्वं दर्शयति बहुवचनेन । नृप इति । न क्षत्रियमात्रस्यायं धर्मः किं तु प्रजापालने ऽधिकृतस्यान्यस्यापि । इति दर्शयति । पश्येदिति । पूर्वोक्तस्यानुवादो धर्मविशेषविधानार्थः । विद्वद्भिर्वेदव्याकरणधर्मशास्त्राभिज्ञैः । ब्राह्मणैर्न क्षत्रियादिभिः । ब्राह्मणैः सहेति तृतीयानिर्देशात्तेषामप्राधान्यम् । सहयुक्ते ऽप्रधाने (Pâṇini 2, 3, 19) इति स्मरणात् । अतथादर्शने
25 ऽन्यथादर्शने च राज्ञो दोषो न ब्राह्मणानाम् । यथाह मनुः (8, 128) ।

अदण्ड्यान्दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥

इति । धर्मशास्त्रानुसारेण नार्थशास्त्रानुसारेण । देशादिसमयधर्मस्यापि धर्मशास्त्राविरुद्धस्य धर्मशास्त्रविषयत्वान्न पृथगुपादानम् । यथा वक्ष्यति (Jâǵn. 2,186) ।

निजधर्माविरोधेन यस्तु सामयिको भवेत् ।
सो ऽपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥

5 इति । क्रोधलोभविवर्जित इति । धर्मशास्त्रानुसारेणेति सिद्धे क्रोधलोभविवर्जित इति वचनमादरार्थम् । क्रोधो ऽमर्षः । लोभो लिप्सातिशयः । किं च ।

श्रुताध्ययनसंपन्ना धर्मज्ञाः सत्यवादिनः ।
राज्ञा सभासदः कार्या रिपौ मित्रे च ये समाः ॥ Jâǵn. 2,2.

श्रुतेन मीमांसाव्याकरणादिश्रवणेन । वेदाध्ययनेन च संपन्नाः । धर्मज्ञा धर्मशास्त्रज्ञाः ।
10 सत्यवादिनः सत्यवदनशीलाः । रिपौ मित्रे च ये समा द्वेषरागरहिताः । एवंभूताः सभासदः । सभायां संसदि यथा सीदन्त्युपविशन्ति तथा दानमानसत्कारै राज्ञा कर्तव्याः । यद्यपि श्रुताध्ययनसंपन्ना इत्यविशेषेणोक्तं तथापि ब्राह्मणा एव । यथाह कात्यायनः ।

स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैर्मौलैर्द्विजोत्तमैः ।
धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥

15 इति । ते च त्रयः कर्तव्या बहुवचनस्यार्थवत्त्वात् ।

यस्मिन्देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।

इति मनुस्मरणात् (8,11,a) । बृहस्पतिस्तु सप्त पञ्च त्रयो वा सभासदो भवन्तीत्याह ।

लोकवेदज्ञधर्मज्ञाः सप्त पञ्च त्रयो ऽपि वा ।
यत्रोपविष्टा विप्राः स्युः सा यज्ञसदृशी सभा ॥

20 इति । न च ब्राह्मणैः सहेति पूर्वश्लोकोक्तानां ब्राह्मणानां श्रुताध्ययनसंपन्ना इत्यादि विशेषणमिति मन्तव्यं तृतीयाप्रथमान्तनिर्दिष्टानां विशेषणविशेष्यभावासंभवात् । विद्वद्भिरित्यनेन पुनरुक्तिप्रसङ्गाच्च । तथा च कात्यायनेन ब्राह्मणानां सभासदां च स्पष्टं भेदो दर्शितः ।

सप्राड्विवाकः सामात्यः सब्राह्मणपुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥

25 इति । तत्र ब्राह्मणा अनियुक्ताः सभासदस्तु नियुक्ता इति भेदः । अत एवोक्तम् ।

नियुक्तो वानियुक्तो वा धर्मज्ञो वक्तुमर्हति ।

इति । तत्र नियुक्तानां यथावस्थितार्थकथने ऽपि यदि राजान्यथा करोति तदासौ निवारणीयः । अन्यथा दोषः । उक्तं च कात्यायनेन ।

अन्यायेनापि तं यान्तं ये ऽनुयान्ति सभासदः ।
30 ते ऽपि तद्भागिनस्तस्माद्बोधनीयः स तैर्नृपः ॥

इति । अनियुक्तानां पुनरन्यथाभिधाने ऽनभिधाने वा दोषो न तु राज्ञो ऽनिवारणे ।

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥

इति मनुवचनात् (8, 13)। रिपौ मित्रे चेति चशब्दाल्लोकरञ्जनार्थं कतिपयैर्वणिग्भिरप्य-
धिष्ठितं सदः कर्तव्यम्। यथाह कात्यायनः।

कुलशीलवयोवृत्तवित्तवद्भिरमत्सरैः।
वणिग्भिः स्यात्कतिपयैः कुलभूतैरधिष्ठितम्॥

5 इति। व्यवहारान्नृपः पश्येदित्युक्तम्। तत्रानुकल्पमाह।

अपश्यता कार्यवशाद्व्यवहारान्नृपेण तु।
सभ्यैः सह नियोक्तव्यो ब्राह्मणः सर्वधर्मवित्॥ JÂGÑ. 2,3.

कार्यान्तरव्याकुलतया व्यवहारानपश्यता नृपेण पूर्वोक्तैः सभ्यैः सह सर्वधर्मवित्। सर्वा-
न्धर्मशास्त्रोक्तान्सामयिकांश्च धर्मान्वेत्ति चित्ते विचारयतीति सर्वधर्मवित्। ब्राह्मणो न
10 क्षत्रियादिर्नियोक्तव्यो व्यवहारदर्शने। तं च कात्यायनोक्तगुणविशिष्टं कुर्यात्। यथाह।

दान्तं कुलीनं मध्यस्थमनुद्वेगकरं स्थिरम्।
परत्र भीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम्॥

इति। एवंभूतब्राह्मणासंभवे क्षत्रियं वैश्यं वा नियुञ्जीत न शूद्रम्। यथाह कात्यायनः।

ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत्।
15 वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत्॥

इति। नारदेन त्वयमेव मुख्यो दर्शितः।

धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः।
समाहितमतिः पश्येद्व्यवहाराननुक्रमात्॥

इति। प्राड्विवाकमते स्थितो न स्वमते स्थितः। राज्ञा चारचक्षुषा परसैन्यं पश्यतीतिवत्।
20 तस्य चेयं यौगिकी संज्ञा। अर्थिप्रत्यर्थिनौ पृच्छतीति प्राट्। तयोर्वचनं विरुद्धमविरुद्धं
च सभ्यैः सह विविनक्ति विवक्तीति विवाकः। प्राट्चासौ विवाकश्चेति प्राड्विवाकः।
उक्तं च।

विवादानुगतं पृष्ट्वा ससभ्यस्तत्प्रयत्नतः।
विचारयति येनासौ प्राड्विवाकस्ततः स्मृतः॥

25 इति। अपि च।

रागाल्लोभाद्भयाद्वापि स्मृत्यपेतादिकारिणः।
सभ्याः पृथक्पृथग्दण्ड्या विवादाद्द्विगुणं दमम्॥ JÂGÑ. 2,4.

पूर्वोक्ताः सभ्या रजसो निरङ्कुशत्वेन तदभिभूताः। रागात्स्नेहातिशयात्। लोभाद्वा लिप्साति-
शयात्। भयात्संत्रासाद्वा। स्मृत्यपेतं स्मृतिविरुद्धम्। आदिशब्दादाचारापेतम्। कुर्वन्तः।
30 पृथक्पृथगेकैकशः। विवादाद्विवादपराजयनिमित्ताद्दमात्। द्विगुणं दमं दण्ड्याः। न पुन-
र्विवादास्पदीभूताद्द्रव्यात्। तथा सति स्त्रीसंग्रहणादिषु दण्डाभावप्रसङ्गः। रागलोभभया-
नामुपादानं रागादिष्वेव द्विगुणो दमो नाज्ञानमोहादिष्विति नियमार्थम्। न च राज्ञा सर्वस्ये-
ष्टे ब्राह्मणवर्जमिति (11,1) गौतमवचनान्न ब्राह्मणा दण्ड्या इति मन्तव्यं तस्य प्रशंसार्थत्वात्।

यत्तु षड्भिः परिहार्यो राज्ञा। अवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरि-
हार्यश्चेति (8, 12. fg.) तदपि स एष बहुश्रुतो भवति लोकवेदवेदाङ्गविद्वाकोवाक्येतिहा-
सपुराणकुशलस्तदपेक्षस्तद्वृत्तिश्चत्वारिंशता संस्कारैः संस्कृतस्त्रिषु कर्मस्वभिरतः षट्सु वा
सामयाचारिकेष्वभिविनीत (8, 4—11) इति प्रतिपादितबहुश्रुतविषयं न ब्राह्मणमात्रवि-
5 षयम्। व्यवहारविषयमाह।

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्॥ JÂǴN. 2, 5.

धर्मशास्त्रसमाचारविरुद्धेन मार्गेण परैराधर्षितो ऽभिभूतः। यद्राज्ञे प्राड्विवाकाय वा।
आवेदयति विज्ञापयति। चेद्यदि। तदावेद्यमानं व्यवहारपदम्। प्रतिज्ञोत्तरसंशयहेतुपरा-
10 मर्शप्रमाणनिर्णयप्रयोजनात्मको यो व्यवहारस्तस्य पदं विषयः। तस्य चेदं सामान्यलक्ष-
णम्। स च द्विविधः। शङ्काभियोगस्तत्त्वाभियोगश्चेति। यथाह नारदः।

अभियोगस्तु विज्ञेयः शङ्कातत्त्वाभियोगतः।
शङ्कासतां तु संसर्गात्तत्त्वं होढाभिदर्शनात्॥

इति। होढा लोप्त्रं लिङ्गमिति यावत्। तेन दर्शनं साक्षाद्वा दर्शनम्। तस्मात्। तत्त्वाभियोगो
15 ऽपि द्विविधः। प्रतिषेधात्मको विध्यात्मकश्चेति। यथा। मत्तो हिरण्यादिकं गृहीत्वा न
प्रयच्छतीति। क्षेत्रादिकं ममापहरतीति वा। उक्तं च कात्यायनेन।

न्याय्यं स्वं नेच्छते कर्तुमन्याय्यं वा करोति यः।

इति। स पुनश्चाष्टादशधा भिद्यते। यथाह मनुः (8, 4—7)।

तेषामाद्यमृणादानं निक्षेपो ऽस्वामिविक्रयः।
20 संभूय च समुत्थानं दत्तस्यानपकर्म च॥
वेतनस्यैव चादानं संविदश्च व्यतिक्रमः।
क्रयविक्रयानुशयो विवादः स्वामिपालयोः॥
सीमाविवादधर्मश्च पारुष्ये दण्डवाचिके।
स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च॥
25 स्त्रीपुंधर्मो विभागश्च द्यूतमाह्वय एव च।
पदान्यष्टादशैतानि व्यवहारस्थिताविह॥

इति। एतान्यपि साध्यभेदेन पुनर्बहुत्वं गतानि। यथाह नारदः।

एषामेव प्रभेदो ऽन्यः शतमष्टोत्तरं स्मृतम्।
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते॥

30 इति। आवेदयति चेदित्यनेन स्वयमेवागत्यावेदयति न राजप्रेरितस्तत्पुरुषप्रेरितो वेति
दर्शयति। यथाह मनुः (8, 43)।

नोत्पादयेत्स्वयं कार्यं राजा नाप्यस्य पूरुषः।
न च प्रापितमन्येन ग्रसेतार्थं कथं चन॥

इति। पौरैरिति परेण पराभ्यां पौरैरित्येकस्यैकेन द्वाभ्यां बहुभिर्वा व्यवहारो भवतीति दर्शयति। यत्पुनः।

एकस्य बहुभिः सार्धं स्त्रीणां प्रेष्यजनस्य च।
अनादेयो भवेद्वादो धर्मविद्भिरुदाहृतः॥

5 इति नारदवचनं तद्भिन्नसाध्यद्वयविषयम्। आवेदयति राज्ञ इत्यनेनैव राज्ञा पृष्टो विनीतवेष आवेदयेत्। आवेदितं च युक्तं चेन्मुद्रादिना प्रत्यर्थ्याह्वानमकल्यादीनां चानाह्वानमित्याद्यर्थसिद्धमिति नोक्तम्। स्मृत्यन्तरे तु स्पष्टार्थमुक्तम्। यथा।

काले कार्यार्थिनं पृच्छेत्प्रणतं पुरतः स्थितम्।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव॥
10 केन कस्मिन्कदा कस्मात्पृच्छेदेवं सभागतम्।
एवं पृष्टः स यद्ब्रूयात्तत्सभ्यैर्ब्राह्मणैः सह॥
विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतः परम्।
मुद्रां वा निक्षिपेत्तस्मिन्पुरुषं वा समादिशेत्॥
अकल्यबालस्थविरविषमस्थक्रियाकुलान्।
15 कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान्॥
मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वानयेन्नृपः।
न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम्॥
सर्ववर्णोत्तमां कन्यां ता ज्ञातिप्रभुकाः स्मृताः।
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः॥
20 निष्कुला याश्च पतितास्तासामाह्वानमिष्यते।
कालं देशं च विज्ञाय कार्याणां च बलाबलम्॥
अकल्यादीनपि शनैर्यानैराह्वानयेन्नृपः।
ज्ञात्वाभियोगं येऽपि स्युर्वने प्रव्रजितादयः॥
तानप्याह्वानयेद्राजा गुरुकार्येष्वकोपयन्।

25 इति। आसेधव्यवस्थाप्यर्थसिद्धैव नारदेनोक्ता।

वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम्॥
स्थानासेधः कालकृतः प्रवासात्कर्मणस्तथा।
चतुर्विधः स्यादासेधो नासिद्धस्तं विलङ्घयेत्॥
30 आसेधकाल आसिद्ध आसेधं योऽतिवर्तते।
स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग्भवेत्॥
नदीसंतारकान्तारदुर्देशोपप्लवादिषु।
आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात्॥

निवेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः।
अभियुक्तस्तथान्येन राजकार्योद्यतस्तथा॥
गवां प्रचारे गोपालाः सस्यावापे कृषीवलाः।
शिल्पिनश्चापि तत्कालमायुधीयाश्च विग्रहे॥

5 इति। आसेधो राजाज्ञयावरोधः। अकल्यादयः पुत्रादिकमन्यं वा सुहृदं प्रेषयन्ति। न च ते परार्थवादिनः

यो न भ्राता न च पिता न पुत्रो न नियोगकृत्।
परार्थवादी दण्ड्यः स्याद्व्यवहारेषु विब्रुवन्॥

इति नारदवचनात्। प्रत्यर्थिनि मुद्रालेख्यपुरुषाणामन्यतमेनानीते किं कुर्यादित्यत आह।

10 प्रत्यर्थिनोऽग्रतो लेख्यं यथावेदितमर्थिना।
समामासतदर्धाहर्नामजात्यादिचिह्नितम्॥ Jâǵń. 2,6.

अर्थ्यत इत्यर्थः साध्यः। सोऽस्यास्तीत्यर्थी। तत्प्रतिपक्षः प्रत्यर्थी। तस्याग्रतः पुरतः। लेख्यं लेखनीयम्। यथा येन प्रकारेण। पूर्वमावेदनकाल आवेदितम्। तथा न पुनरन्यथा। अन्यथावादित्वेन भङ्गप्रसङ्गात्।

15 अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः।
आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः॥

इति। आवेदनकाल एवार्थिवचनस्य लिखितत्वात्पुनर्लेखनमनर्थकमित्यत आह समामासेत्यादि। संवत्सरमासपक्षतिथिवारदिनार्थिप्रत्यर्थिनामब्राह्मणादिजात्यादिचिह्नितम्। आदिशब्देन द्रव्यतत्संख्यास्थानवेलाक्षमालिङ्गादीनि गृह्यन्ते। यथोक्तम्।

20 अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम्।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम्।
संक्षिप्तं निखिलार्थं च देशकालाविरोधि च॥
वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत्।
25 स्थानावसथसाध्याख्याजात्याकारवयोयुतम्॥
साध्यप्रमाणसंख्यावदात्मप्रत्यर्थिनामवत्।
परात्मपूर्वजानेकराजनामभिरङ्कितम्॥
क्षमालिङ्गात्मपीडावत्कथिताहर्तृदायकम्।
यदावेद्यते राज्ञे तद्भाषेत्यभिधीयते॥

30 इति। भाषा प्रतिज्ञा पक्ष इत्यनर्थान्तरम्। आवेदनसमये कार्यमात्रं लिखितम्। प्रत्यर्थिनोऽग्रतः समामासादिविशिष्टं लिख्यत इति विशेषः। संवत्सरविशेषणं यद्यपि सर्वव्यवहारेषु नोपयुज्यते तथाप्याधिप्रतिग्रहक्रयेषु निर्णयार्थमुपयुज्यते।

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा।

इति वचनात् (JÂGŃ. 2, 23, b) । अर्थव्यवहारे ऽप्येकस्मिन्वत्सरे यत्संख्याकं यद्द्रव्यं यतो
येन गृहीतं प्रत्यर्पितं चेति । पुनरन्यस्मिन्वत्सरे तद्द्रव्यं तत्संख्याकं ततस्तेन गृहीतं
याच्यमानो यदि ब्रूयात् । सत्यं गृहीतं प्रत्यर्पितं चेति । वत्सरान्तरे गृहीतं प्रत्यर्पितं
नास्मिन्वत्सर इत्युपयुज्यते । एवं मासाद्यपि योज्यम् । देशस्थानादयः पुनः स्थावरेष्वेवोपयु-
5 ज्यन्ते । देशश्चैव तथा स्थानं संनिवेशस्तथैव च ।

जातिः संज्ञाधिवासश्च प्रमाणं क्षेत्रनाम च ॥

पितृपैतामहं चैव पूर्वराजानुकीर्तनम् ।

स्थावरेषु विवादेषु दशैतानि प्रवेशयेत् ॥

इति स्मरणात् । देशो मध्यदेशादिः । स्थानं वाराणस्यादि । संनिवेशस्तत्रैव पूर्वापरदिग्वि-
10 भागपरिच्छिन्नः सम्यग्निविष्टो गृहक्षेत्रादिः । जातिरर्थिप्रत्यर्थिनोर्ब्राह्मणत्वादिः । संज्ञा च
देवदत्तादिः । अधिवासः समीपदेशनिवासी जनः । प्रमाणं निवर्तनादि भूमिपरिमाणम् । क्षे-
त्रनाम शालिक्षेत्रं कुसुम्भक्षेत्रं कृष्णभूमः पाण्डुभूम इति । पितुः पितामहस्य च नामार्थिप्रत्य-
र्थिनोः । पूर्वेषां त्रयाणां राज्ञां नामकीर्तनं चेति । समामासादीनां यस्मिन्व्यवहारे यावदु-
पयुज्यते तत्र तावल्लेखनीयमिति तात्पर्यार्थः । एवं पक्षलक्षणे स्थिते पक्षलक्षणरहितानां
15 पक्षवदवभासमानानां पक्षाभासत्वं सिद्धमेवेति योगीश्वरेण न पृथक्पक्षाभासा उक्ताः । अन्यैस्तु
स्पष्टार्थमुक्तम् । अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।

असाध्यं वा विरुद्धं वा पक्षाभासं विवर्जयेत् ॥

इति । अप्रसिद्धम् । मदीयं शशविषाणं गृहीत्वा न प्रयच्छतीत्यादि । निराबाधम् । अस्मद्-
गृहप्रदीपप्रकाशेनायं स्वगृहे व्यवहरतीत्यादि । निरर्थमभिधेयरहितं कचटतपगजडदबमि-
20 त्यादि । निष्प्रयोजनं यथा । अयं देवदत्तो ऽस्मद्गृहसंनिधौ सुस्वरमधीत इत्यादि । असाध्यं यथा ।
अहं देवदत्तेन सभ्रूभङ्गमुपहसित इत्यादि । एतत्साधनासंभवादसाध्यम् । अल्पकालत्वान्न
साक्षिसंभवः । लिखितं दूरतः । अल्पत्वान्न दिव्यमित्यादि । विरुद्धं यथा । अहं मूकेन शप्त
इत्यादि । पुरराष्ट्रादिविरुद्धं वा ।

राज्ञा विवर्जितो यश्च यश्च पौरविरोधकृत् ।

25 राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥

अन्ये वा ये पुरग्राममहाजनविरोधकाः ।

अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥

इति । यत्तु अनेकपदसंकीर्णः पूर्वपक्षो न सिध्यति ।

इति तत्र यद्यनेकवस्तुसंकीर्णा इत्युच्यते तदा न दोषः । मदीयमनेन हिरण्यं वासो रूपका-
30 दि चापहृतमित्येवंविधस्यादुष्टत्वात् । ऋणादानादिपदसंकरे पक्षाभास इति चेत्तदपि न । म-
दीया रूपका अनेन वृद्ध्या गृहीताः सुवर्णं चास्य हस्ते निक्षिप्तं मदीयं क्षेत्रमपहरति चे-
त्यादीनां पक्षत्वमिष्यत एव । किं तु क्रियाभेदात्क्रमेण व्यवहारो न युगपदित्येतावत् ।
यथाह कात्यायनः ।

बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥

इति । तस्मादनेकपदसंकीर्णः पूर्वपक्षो युगपन्न सिध्यतीति तस्यार्थः । अर्थिग्रहणात्पुत्रपि-
त्रादीनां ग्रहणं तेषामेकार्थत्वात् । नियुक्तस्यापि नियोगेनैव तदेकार्थत्वात्तेपात् ।

5 अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितो ऽपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥

इति स्मरणात् । नियुक्तजयपराजयौ मूलस्वामिनोरेव । एतच्च भूमौ फलके वा पाण्डुलेखेन
लिखित्वावापोद्धारेण शोधितं पश्चात्पत्त्रे निवेशयेत् ।

पूर्वपक्षं स्वभावोक्तं प्राड्विवाको ऽभिलेखयेत् ।
10 पाण्डुलेखेन फलके ततः पत्त्रे विशोधितम् ॥

इति कात्यायनस्मरणात् । शोधनं च यावदुत्तरदर्शनं कर्तव्यं नातः परमनवस्थाप्रसङ्गात् ।
अत एव नारदेनोक्तम् ।

शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥

15 इति । पूर्वपक्षमशोधयित्वैव यद्युत्तरं दापयन्ति सभ्यास्तदा रागाल्लोभादित्युक्तदण्डेन (vgl.
Jáǵn. 2,4) सभ्यान्दण्डयित्वा पुनः प्रतिज्ञापूर्वकं व्यवहारः प्रवर्तनीयो राज्ञा ।

---

## XVI. Suçruta.

### Ueber Blutegel (1, 13).

अथातो जलौकावचारणीयमध्यायं व्याख्यास्यामः । नृपाढ्यबालस्थविरभीरुदुर्बलना-
रीसुकुमाराणामनुग्रहार्थं परमसुकुमारो ऽयं शोणितावसेचनोपायो ऽभिहितो जलौकसः ।
तत्र वातपित्तकफदुष्टशोणितं यथासंख्यं शृङ्गजलौकालाबुभिरवसेचयेत्स्निग्धशीतरूक्ष-
20 त्वात् । सर्वाणि सर्वैर्वा । भवन्ति चात्र ।

उष्णं समधुरं स्निग्धं गवां शृङ्गं प्रकीर्तितम् ।
तस्माद्वातोपसृष्टे तु हितं तदवसेचने ॥ १ ॥
शीताधिवासा मधुरा जलौका वारिसंभवा ।
तस्मात्पित्तोपसृष्टे तु हिता सा त्ववसेचने ॥ २ ॥
25 अलाबु कटुकं रूक्षं तीक्ष्णं च परिकीर्तितम् ।
तस्माच्छ्लेष्मोपसृष्टे तु हितं तदवसेचने ॥ ३ ॥

तत्र प्रच्छिते तनुवस्त्रपटलावनद्धेन शृङ्गेण शोणितमवसेचयेदा चूषणात् । सान्तर्दीपया-
लाब्वा वा ।

अथ जलायुका वक्ष्यन्ते । जलमासामायुरिति जलायुकाः । जलमासामोक इति जलौ-
कसः । ता द्वादश । तासां सविषाः षट् । तावत्य एव निर्विषाः ।

5 तत्र सविषाः । कृष्णा कर्बुरालगर्देन्द्रायुधा सामुद्रिका गोचन्दना चेति । तास्वञ्जनचूर्ण-
वर्णा पृथुशिराः कृष्णा । वर्मिमत्स्यवदायता छिन्नोन्नतकुक्षिः कर्बुरा । रोमशा महापार्श्वा
कृष्णमुख्यलगर्दा । इन्द्रायुधवदूर्ध्वराजिभिश्चित्रितेन्द्रायुधा । ईषदसितपीतिका विचित्रपु-
ष्पाकृतिचित्रा सामुद्रिका । गोवृषणवदधोभागे द्विधाभूताकृतिरणुमुखी गोचन्दनेति । ता-
भिर्दष्टे पुरुषे दंशे श्वयथुरतिमात्रं कण्डूर्मूर्च्छा ज्वरो दाहश्छर्दिर्मदः सदनमिति लिङ्गानि
10 भवन्ति । तत्र महागदः पानालेपननस्यकर्मादिषूपयोज्यः । इन्द्रायुधादष्टमसाध्यम् । इत्येताः
सविषाः सचिकित्सिता व्याख्याताः ।

अथ निर्विषाः । कपिला पिङ्गला शङ्कुमुखी मूषिका पुण्डरीकमुखी शाबरिका चेति ।
तत्र मनःशिलारञ्जिताभ्यामिव पार्श्वाभ्यां पृष्ठे स्निग्धमुद्गवर्णा कपिला । किं चिद्रक्ता वृत्त-
काया पिङ्गाशुगा च पिङ्गला । यकृद्वर्णा शीघ्रपायिनी दीर्घतीक्ष्णमुखी शङ्कुमुखी । मूषिका-
15 कृतिवर्णानिष्टगन्धा च मूषिका । मुद्गवर्णा पुण्डरीकतुल्यवक्त्रा पुण्डरीकमुखी । स्निग्धा
पद्मपत्त्रवर्णाष्टादशाङ्गुलप्रमाणा शाबरिका । सा च पश्वर्थे । इत्येता अविषा व्याख्याताः ।
तासां यवनपाण्ड्यसह्यपौतनादीनि क्षेत्राणि । तेषु महाशरीरा बलवत्यः शीघ्रपायिन्यो
महाशना निर्विषाश्च विशेषेण भवन्ति । तत्र सविषमत्स्यकीटदर्दुरमूत्रपुरीषकोथजाताः
कलुषेष्वम्भस्सु च सविषाः । पद्मोत्पलनलिनकुमुदसौगन्धिककुवलयपुण्डरीकशैवालको-
20 थजाता विमलेष्वम्भस्सु च निर्विषाः । भवति चात्र ।

क्षेत्रेषु विचरन्त्येताः सलिलेषु सुगन्धिषु ।
न च संकीर्णचारिण्यो न च पङ्केशयाः सुखाः ॥

तासां ग्रहणम् । आर्द्रचर्मणान्यैर्वा प्रयोगैर्गृह्णीयात् । अथैना नवे महति घटे सरस्तडा-
गोदकपङ्कमावाप्य निदध्यात् । भक्ष्यार्थं चासामुपहरेच्छैवलं वल्लूरमौदकांश्च कन्दांश्च चूर्णी-
25 कृत्य । शय्यार्थं तृणमौदकानि च पत्त्राणि । द्व्यहात्त्र्यहाद्वान्यज्जलं भक्ष्यं च दद्यात् । सप्तरा-
त्रात्सप्तरात्राच्च घटमन्यं संक्रामयेत् । भवति चात्र ।

स्थूलमध्याः परिक्लिष्टाः पृथ्व्यो मन्दविचेष्टिताः ।
अग्राहिण्यो ऽल्पपायिन्यः सविषाश्च न पूजिताः ॥

अथ जलौकोऽवसेकसाध्यव्याधितमुपवेश्य संवेश्य वा विरूक्ष्य चास्य तमवकाशं मृद्गो-
30 मयचूर्णैर्यद्यरुजः स्याद्गृहीताश्च ताः सर्षपरजनीकल्कोदकप्रदिग्धगात्रीः सलिलसरकमध्ये
मुहूर्तस्थिता विगतक्लमा ज्ञात्वा ताभी रोगं ग्राहयेत् । सूक्ष्मशुक्लार्द्रपिचुप्लोतावच्छन्नां कृ-
त्वा मुखमपावृणुयात् । अगृह्णन्त्यै क्षीरबिन्दुं शोणितबिन्दुं वा दद्यात् । शस्त्रपदानि वा
कुर्वीत । यद्येवमपि न गृह्णीयात्तदान्यां ग्राहयेत् । यदा च निविशते ऽश्वखुरवदाननं कृत्वा-

अस्य च स्कन्धं तदा जानीयात् । गृह्णातीति । गृह्णतीं चार्द्रवस्त्रावच्छन्नां धारयेत्सेचयेच्च ।
दंशे तोदकण्डूप्रादुर्भावैर्जानीयात् । शुद्धमियमादत्त इति । शुद्धमाददानामपनयेत् । अथ शो-
णितगन्धेन न मुञ्चेन्मुखमस्याः सैन्धवचूर्णेनावकिरेत् । अथ पतितां तण्डुलकण्डनप्रदि-
ग्धगात्रीं तैललवणाभ्यक्तमुखीं वामहस्ताङ्गुष्ठाङ्गुलिभ्यां गृहीतपुच्छां दक्षिणहस्ताङ्गु-
5 ष्ठाङ्गुलिभ्यां शनैः शनैरनुलोममनुमार्जयेदा मुखात् । वामयेत्तावद्यावत्सम्यग्वान्तलिङ्गानी-
ति । सम्यग्वान्ता सलिलसरकन्यस्ता भोक्तुकामा सती चरेत् । या सीदति न चेष्टते सा
दुर्वान्ता । तां पुनः सम्यग्वामयेत् । दुर्वान्ताया व्याधिरसाध्य इन्द्रमदो नाम भवति । अथ
सुवान्तां पूर्ववत्संनिदध्यात् । शोणितस्य च योगायोगानवेक्ष्य जलौकोव्रणं मधुनावघट्टयेत् ।
शीताभिरद्भिश्च परिषेचयेत् । बध्नीत वा व्रणम् । कषायमधुरस्निग्धशीतैश्च प्रदेहैः प्रदि-
10 ह्यादिति । भवति चात्र ।

क्षेत्राणि ग्रहणं जातीः पोषणं सावचारणम् ।
जलौकसां च यो वेत्ति तत्साध्यान्स जयेद्गदान् ॥

---

## XVII. Varâhamihira's Bṛhatsam̃hitâ.

### 1. Der Gang des Siebengestirns (13,1—11).

सैकावलीव राजति ससितोत्पलमालिनी सहासेव ।
नाथवतीव च दिग्यैः कौबेरी सप्तभिर्मुनिभिः ॥ १ ॥
15 ध्रुवनायकोपदेशान्नरिनर्तीवोत्तरा भ्रमद्भिश्च ।
यैश्चारमहं तेषां कथयिष्ये वृद्धगर्गमतात् ॥ २ ॥
आसन्मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ ।
षड्द्विकपञ्चद्वियुतः शककालस्तस्य राज्यस्य ॥ ३ ॥
एकैकस्मिन्नृक्षे शतं शतं ते चरन्ति वर्षाणाम् ।
20 प्रागुत्तरतश्चैते सदोदयन्ते ससाध्वीकाः ॥ ४ ॥
पूर्वे भागे भगवान्मरीचिरपरे स्थितो वसिष्ठोऽस्मात् ।
तस्याङ्गिरास्ततोऽत्रिस्तस्यासन्नः पुलस्त्यश्च ॥ ५ ॥
पुलहः क्रतुरिति भगवानासन्नानुक्रमेण पूर्वाद्याः ।
तत्र वसिष्ठं मुनिवरमुपाश्रितारुन्धती साध्वी ॥ ६ ॥
25 उल्काशनिधूमाद्यैर्हता विवर्णा विरश्मयो ह्रस्वाः ।
हन्युः स्वं स्वं वर्गं विपुलाः स्निग्धाश्च तद्वृद्ध्यै ॥ ७ ॥

गन्धर्वदेवदानवमन्त्रौषधिसिद्धयक्षनागानाम् ।
पीडाकरो मरीचिर्विज्ञेयो विद्याधराणां च ॥ ८ ॥
शकयवनदरदपारतकाम्बोजांस्तापसान्वनोपेतान् ।
हन्ति वसिष्ठो ऽभिहतो विवृद्धिदो रश्मिसंपन्नः ॥ ९ ॥
5 अङ्गिरसो ज्ञानयुता धीमन्तो ब्राह्मणाश्च निर्दिष्टाः ।
अत्रेः कान्तारभवा जलजान्यम्भोनिधिः सरितः ॥ १० ॥
रक्षःपिशाचदानवदैत्यभुजंगाः स्मृताः पुलस्त्यस्य ।
पुलहस्य तु मूलफलं क्रतोस्तु यज्ञाः सयज्ञभृतः ॥ ११ ॥

---

### 2. Das Erdbeben (32, 1—23. 27—32).

क्षितिकम्पमाहुरेके बृहदन्तर्जलनिवासिसत्त्वकृतम् ।
10 भूभारखिन्नदिग्गजविश्रामसमुद्भवं चान्ये ॥ १ ॥
अनिलो ऽनिलेन निहतः क्षितौ पतन्सस्वनं करोत्येके ।
के चित्त्वदृष्टकारितमिदमन्ये प्राहुराचार्याः ॥ २ ॥
गिरिभिः पुरा सपक्षैर्वसुधा प्रपतद्भिरुत्पतद्भिश्च ।
आकम्पिता पितामहमाहामरसदसि सव्रीडम् ॥ ३ ॥
15 भगवन्नाम ममैतत्त्वया कृतं यदचलेति तन्न तथा ।
क्रियते ऽचलैश्चलद्भिः शक्ताहं नास्य खेदस्य ॥ ४ ॥
तस्याः सगद्गदगिरं किंचित्स्फुरिताधरं विनतमीषत् ।
साश्रुविलोचनमाननमवलोक्य पितामहः प्राह ॥ ५ ॥
मन्युं हरेन्द्र धात्र्याः क्षिप कुलिशं शैलपक्षभङ्गाय ।
20 शक्रः कृतमित्युक्त्वा मा भैरिति वसुमतीमाह ॥ ६ ॥
किं त्वनिलदहनसुरपतिवरुणाः सदसत्फलावबोधार्थम् ।
प्राग्द्वित्रिचतुर्भागेषु दिननिशोः कम्पयिष्यन्ति ॥ ७ ॥
चत्वार्यार्यम्णाद्यान्यादित्यं मृगशिरो ऽश्वयुक्चेति ।
मण्डलमेतद्वायव्यमस्य रूपाणि सप्ताहात् ॥ ८ ॥
25 धूमाकुलीकृताशे नभसि नभस्वान्रजः क्षिपन्भौमम् ।
विरुजन्द्रुमांश्च विचरति रविरपटुकरावभासी च ॥ ९ ॥
वायव्ये भूकम्पे सस्याम्बुवनौषधिक्षयो ऽभिहितः ।
श्वयथुश्वासोन्मादज्वरकासभवा वणिक्पीडा ॥ १० ॥
रूपायुधभृद्वैद्याः स्त्रीकविगान्धर्वपण्यशिल्पिजनाः ।
30 पीड्यन्ते सौराष्ट्रककुरुमगधदशार्णमत्स्याश्च ॥ ११ ॥

पुष्याग्नेयविशाखाभरणीपित्र्याजभाग्यसंज्ञानि ।
वर्गो हैातभुजो ऽयं करोति नृपाणयष्यैतानि ॥ १२ ॥
तारोल्कापातावृतमादीप्तमिवाम्बरं सदिग्दाहम् ।
विचरति मरुत्सहायः सप्तार्चिः सप्तदिवसान्तः ॥ १३ ॥
5 आग्नेये ऽम्बुदनाशः सलिलाशयसंक्षयो नृपतिवैरम् ।
दद्रूविचर्चिकाज्वरविसर्पिकाः पाण्डुरोगश्च ॥ १४ ॥
दीप्तौजसः प्रचण्डाः पीड्यन्ते चाश्मकाङ्गबाल्हीकाः ।
तङ्गणकलिङ्गवङ्गद्रविडाः शबराश्च नैकविधाः ॥ १५ ॥
अभिजिच्छ्रवणधनिष्ठाप्राजापत्येन्द्रवैश्वमैत्राणि ।
10 सुरपतिमण्डलमेतद्भवन्ति चास्य स्वरूपाणि ॥ १६ ॥
चलिताचलवर्ष्माणो गम्भीरविरावियस्तडित्वन्तः ।
गवलालिकुलाहिनिभा विसृजन्ति पयः पयोवाहाः ॥ १७ ॥
ऐन्द्रं श्रुतकुलजातिख्यातावनिपालगणपविध्वंसि ।
अतिसारगलग्रहवदनरोगकृच्छर्दिकोपाय ॥ १८ ॥
15 काशियुगंधरपौरवकिरातकीराभिसारहलमद्राः ।
अर्बुदसुवास्तुमालवपीडाकरमिष्टवृष्टिकरम् ॥ १९ ॥
पौष्णाप्यार्द्राश्लेषामूलाहिर्बुध्न्यवरुणदेवानि ।
मण्डलमेतद्वारुणमस्यापि भवन्ति रूपाणि ॥ २० ॥
नीलोत्पलालिभिन्नाञ्जनत्विषो मधुररावियो बहुलाः ।
20 तडिदुद्भासितदेहा धाराङ्कुरवर्षिणो जलदाः ॥ २१ ॥
वारुणमर्णवसरिदाश्रितघ्नमतिवृष्टिदं विगतवैरम् ।
गोनर्दचेदिकुकुरान्किरातवैदेहकान्हन्ति ॥ २२ ॥
षड्भिर्मासैः कम्पो द्वाभ्यां पाकं च याति निर्घातः ।
अन्यानप्युत्पाताञ्जगुरन्ये मण्डलैरेतैः ॥ २३ ॥
25 हन्त्यैन्द्रो वायव्यं वायुश्चाप्यैन्द्रमेवमन्योऽन्यम् ।
वारुणहैातभुजावपि वेलानलजाः कम्पाः ॥ २७ ॥
प्रथितनरेश्वरमरणव्यसनान्याग्नेयवायुमण्डलयोः ।
क्षुद्भयमरकावृष्टिभिरुपतप्यन्ते जनाश्चापि ॥ २८ ॥
वारुणपौरंदरयोः सुभिक्षशिववृष्टिहार्दयो लोके ।
30 गावो ऽतिभूरिपयसो निवृत्तवैराश्च भूपालाः ॥ २९ ॥
पक्षैश्चतुर्भिरनिलस्त्रिभिरग्निर्देवराट् सप्ताहात् ।
सद्यः फलति च वरुणो येषु न कालो ऽद्भुतेषूक्तः ॥ ३० ॥

चलयति पवनः शतद्वयं शतमनलो दशयोजनान्वितम् ।
सलिलपतिरशीतिसंयुतं कुलिशधरो ऽभ्यधिकं च षष्टितः ॥ ३१ ॥
त्रिचतुर्थसप्तमदिने मासे पक्षे तथा त्रिपक्षे च ।
यदि भवति भूमिकम्पः प्रधाननृपनाशनो भवति ॥ ३२ ॥

---

# XVIII. Grammatisches.

### 1. Ueber die Casus.

**Pâṇini 1,4,23. fgg. und 2,3,1. fgg. nebst der Erklärung der Kâçikâ.**

5 कारके । १ । ४ । २३ ।

कारक इति विशेषणमपादानादिसंज्ञाविषयमधिक्रियते । कारक इत्यधिकारो वेदितव्यः । यदित ऊर्ध्वमनुक्रमिष्यामः कारक इत्येवं तद्वेदितव्यम् । कारकशब्दश्च निमित्तपर्यायः । कारकं हेतुरित्यनर्थान्तरम् । कस्य हेतुः । क्रियायाः । वक्ष्यति ध्रुवमपाये ऽपादानम् । ग्रामादागच्छति । पर्वतादवरोहति । कारक इति किम् । वृक्षस्य पर्णं पतति । कुड्यस्य 10 पिण्डः पतति । अकथितं च (५१) । अकथितं च कारकं कर्मसंज्ञं भवति । माणवकं पन्थानं पृच्छति । कारक इति किम् । माणवकस्य पितरं पन्थानं पृच्छति । कारकसंशब्दनेषु चानेनैव विशेषणेन व्यवहारो विज्ञायते ।

ध्रुवमपाये ऽपादानम् । २४ ।

ध्रुवं यदपाययुक्तमपाये साध्ये यदवधिभूतं तत्कारकमपादानसंज्ञं भवति । ग्रामादाग- 15 च्छति । पर्वतादवरोहति । सार्थाद्धीनः । रथात्पतितः । जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् (ein Vârttika) । अधर्माज्जुगुप्सते । अधर्माद्विरमति । धर्मात्प्रमाद्यति । अपादानप्रदेशा अपादाने पञ्चमीत्येवमादयः (२ । ३ । २८) ।

भीत्रार्थानां भयहेतुः । २५ ।

बिभेत्यर्थानां त्रायत्यर्थानां च धातूनां प्रयोगे भयहेतुर्यस्तत्कारकमपादानसंज्ञं भवति । 20 चौरेभ्यो बिभेति । चौरेभ्य उद्विजते । त्रायत्यर्थानाम् । चौरेभ्यस्त्रायते । चौरेभ्यो रक्षति । भयहेतुरिति किम् । अरण्ये बिभेति । अरण्ये त्रायते ।

पराजेरसोढः । २६ ।

परापूर्वस्य जयतेः प्रयोगे ऽसोढो यो ऽर्थः सोढुं न शक्यते तत्कारकमपादानसंज्ञं भवति । अध्ययनात्पराजयते । असोढ इति किम् । शत्रून्पराजयते ।

25 वारणार्थानामीप्सितः । २७ ।

वारणार्थानां धातूनां प्रयोगे य ईप्सितो ऽर्थस्तत्कारकमपादानसंज्ञं ववति । प्रवृत्ति-

विघातो वारणम्। यवेभ्यो गां वारयति। यवेभ्यो गां निवर्तयति। ईप्सित इति किम्। यवेभ्यो गां वारयति क्षेत्रे।

अन्तर्धौ येनादर्शनमिच्छति। २८।

व्यवधानमन्तर्धिः। अन्तर्धिनिमित्तं येनादर्शनमात्मन इच्छति तत्कारकमपादानसंज्ञं
5 भवति। उपाध्यायादन्तर्धत्ते। उपाध्यायान्निलीयते। मा मामुपाध्यायो द्राक्षीदिति निलीयते। अन्तर्धाविति किम्। चौरान्न दिदृक्षते। इच्छतिग्रहणं किम्। अदर्शनेच्छायां सत्यां सत्यपि दर्शने यथा स्यात्।

आख्यातोपयोगे। २९।

आख्याता प्रतिपादयिता। उपयोगो नियमपूर्वकं विद्याग्रहणम्। उपयोगे साध्ये य
10 आख्याता तत्कारकमपादानसंज्ञं भवति। उपाध्यायादधीते। उपाध्यायादागमयति। उपयोग इति किम्। नटस्य शृणोति।

जनिकर्तुः प्रकृतिः। ३०।

जनेः कर्ता जनिकर्ता। जन्यर्थस्य जन्मनः कर्ता जायमानः। तस्य या प्रकृतिः कारणं हेतुस्तत्कारकमपादानसंज्ञं भवति। शृङ्गाच्छरो जायते। गोमयाद्वृश्चिको जायते।

15 भुवः प्रभवः। ३१।

कर्तुरिति वर्तते। भवनं भूः। प्रभवत्यस्मादिति प्रभवः। भूकर्तुः प्रभवो यस्तत्कारकमपादानसंज्ञं भवति। हिमवतो गङ्गा प्रभवति। काश्मीरेभ्यो वितस्ता प्रभवति। प्रथमत उपलभ्यत इत्यर्थः।

कर्मणा यमभिप्रैति स संप्रदानम्। ३२।

20 कर्मणा करणभूतेन कर्ता यमभिप्रैति तत्कारकं संप्रदानसंज्ञं भवति। अन्वर्थसंज्ञाविज्ञानाद्ददातिकर्मणेति विज्ञायते। उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति। क्रियाग्रहणमपि कर्तव्यम् (ein Vârttika)। क्रिययापि यमभिप्रैति स संप्रदानम्। श्राद्धाय निगर्हते। युद्धाय संनह्यते। पत्ये शेते। संप्रदानप्रदेशाश्चतुर्थी संप्रदाने (२। ३। १३) इत्येवमादयः। कर्मणः करणसंज्ञा वक्तव्या संप्रदानस्य च कर्मसंज्ञा (ein Vârttika)। पशुना
25 रुद्रं यजते। पशुं रुद्राय ददातीत्यर्थः।

रुच्यर्थानां प्रीयमाणः। ३३।

रुचिना समानार्था रुच्यर्थाः। अन्यकर्तृको ऽभिलाषो रुचिः। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणो यो ऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति। देवदत्ताय रोचते मोदकः। यज्ञदत्ताय स्वदते ऽपूपः। देवदत्तस्थस्याभिलाषस्य मोदकः कर्ता। प्रीयमाण इति किम्। देवदत्ताय रो-
30 चते मोदकः पथि।

श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः। ३४।

श्लाघ ह्नुङ् स्था शप इत्येतेषां ज्ञीप्स्यमानो यो ऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति। ज्ञीप्स्यमानो ज्ञपयितुमिष्यमाणो बोधयितुमभिप्रेतः। देवदत्ताय श्लाघते। देवदत्तं श्लाघमान-

स्तां श्लाघां तमेव ज्ञपयितुमिच्छतीत्यर्थः । एवं देवदत्ताय ह्नुते । देवदत्ताय तिष्ठते । देवदत्ताय शपते । ज्ञीप्स्यमान इति किम् । देवदत्ताय श्लाघते पथि ।

धारेरुत्तमर्णः । ३५ ।

धारयतेः प्रयोग उत्तमर्णो यो ऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति । उत्तममृणं यस्य स
5 उत्तमर्णः । कस्य चोत्तममृणम् । यदीयं धनम् । धनस्वामी प्रयोक्ता उत्तमर्णः । स संप्रदानसंज्ञो भवति । देवदत्ताय शतं धारयति । उत्तमर्ण इति किम् । देवदत्ताय शतं धारयति ग्रामे ।

स्पृहेरीप्सितः । ३६ ।

स्पृह ईप्सायां चुरादावदन्तः पठ्यते । तस्येप्सितो यो ऽर्थस्तत्कारकं संप्रदानसंज्ञं भवति । ईप्सित इत्यभिप्रेत उच्यते । पुष्पेभ्यः स्पृहयति । ईप्सित इति किम् । पुष्पेभ्यो वने स्पृहयति ।

10 क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः । ३७ ।

अमर्षः क्रोधः । अपकारो द्रोहः । अक्षमा ईर्ष्या । गुणेषु दोषाविष्करणमसूया । क्रुधाद्यर्थानां प्रयोगे यं प्रति कोपस्तत्कारकं संप्रदानसंज्ञं भवति । क्रोधस्तावत्कोप एव । द्रोहादयो ऽपि कोपप्रभावा एव गृह्यन्ते । तस्मात्सामान्येन विशेषणं यं प्रति कोप इति । देवदत्ताय क्रुध्यति । देवदत्ताय द्रुह्यति । देवदत्तायेर्ष्यति । देवदत्तायासूयति । यं प्रति कोप
15 इति किम् । भार्यामीर्ष्यति । मैनामन्यो द्राक्षीदिति ।

क्रुधद्रुहोरुपसृष्टयोः कर्म । ३८ ।

पूर्वेण संप्रदानसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । क्रुधद्रुहोरुपसृष्टयोरुपसर्गसंबद्धयोर्यं प्रति कोपस्तत्कारकं कर्मसंज्ञं भवति । देवदत्तमभिक्रुध्यति । देवदत्तमभिद्रुह्यति । उपसृष्टयोरिति किम् । देवदत्ताय क्रुध्यति । यज्ञदत्ताय द्रुह्यति ।

20 राधीक्ष्योर्यस्य विप्रश्नः । ३९ ।

राधेरीक्षेश्च कारकं संप्रदानसंज्ञं भवति । कीदृशम् । यस्य विप्रश्नः । विविधः प्रश्नो विप्रश्नः । स कस्य भवति । यस्य शुभाशुभं पृच्छ्यते । देवदत्ताय राध्यति । देवदत्तायेक्षते । नैमित्तिकः पृष्टः सन्देवदत्तस्य दैवं पर्यालोचयतीत्यर्थः ।

प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता । ४० ।

25 प्रति आङ् इत्येवंपूर्वस्य शृणोतेः कारकं संप्रदानसंज्ञं भवति । कीदृशम् । पूर्वस्य कर्ता । प्रतिपूर्व आङ्पूर्वश्च शृणोतिरभ्युपगमे प्रतिज्ञाने वर्तते । स चाभ्युपगमः परेण प्रयुक्तस्य सतो भवति । तत्र प्रयोक्ता पूर्वस्याः क्रियायाः कर्ता संप्रदानसंज्ञो भवति । देवदत्ताय गां प्रतिशृणोति । देवदत्ताय गामाशृणोति । प्रतिजानीत इत्यर्थः ।

अनुप्रतिगृणश्च । ४१ ।

30 पूर्वस्य कर्तेति वर्तते । अनुपूर्वस्य प्रतिपूर्वस्य च गृणातेः कारकं पूर्वस्याः क्रियायाः कर्तृभूतं संप्रदानसंज्ञं भवति । होत्रे ऽनुगृणाति । होता प्रथमं शंसति । तमन्यः प्रोत्साहयति । अनुगरः प्रतिगर इति हि शंसितुः प्रोत्साहने वर्तते । होत्रे ऽनुगृणाति । होतारं शंसन्तं प्रोत्साहयतीत्यर्थः ।

साधकतमं करणम् । ४२ ।

क्रियाप्रसिद्धौ यत्प्रकृष्टोपकारकं विवक्षितं तत्साधकतमं कारकं करणसंज्ञं भवति । दात्रेण लुनाति । परशुना छिनत्ति । तमब्ग्रहणं किम् । गङ्गायां घोषः । कूपे गर्गकुलम् । करणप्रदेशाः कर्तृकरणयोस्तृतीयेत्येवमादयः (२ । ३ । १८) ।

5 दिवः कर्म च । ४३ ।

पूर्वेण करणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । दिवः साधकतमं यत्कारकं तत्कर्मसंज्ञं भवति । चकारात्करणसंज्ञं च । अक्षान्दीव्यति । अक्षैर्दीव्यति ।

परिक्रयणे संप्रदानमन्यतरस्याम् । ४४ ।

साधकतममिति वर्तते । पूर्वेण करणसंज्ञायां प्राप्तायां संप्रदानसंज्ञा पक्षे विधीयते ।
10 परिक्रयणे साधकतमं कारकमन्यतरस्यां संप्रदानसंज्ञं भवति । परिक्रयणं नियतकालं वेतनादिना स्वीकरणं नात्यन्तिकः क्रय एव । शताय परिक्रीतो ऽनुब्रूहि । शतेन परिक्रीतो ऽनुब्रूहि ।

आधारो ऽधिकरणम् । ४५ ।

आध्रियन्ते ऽस्मिन्क्रिया इत्याधारः । कर्तृकर्मणोः क्रियाश्रयभूतयोर्धारणक्रियां प्रति
15 य आधारस्तत्कारकमधिकरणसंज्ञं भवति । कट आस्ते । कटे शेते । स्थाल्यां पचति । अधिकरणप्रदेशाः सप्तम्यधिकरणे चेत्येवमादयः (२ । ३ । ३६) ।

अधिशीङ्स्थासां कर्म । ४६ ।

पूर्वेणाधिकरणसंज्ञायां प्राप्तायां कर्मसंज्ञा विधीयते । अधिपूर्वाणां शीङ् स्था आस् इत्येतेषामाधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममधिशेते । ग्राममधितिष्ठति । पर्वत-
20 मध्यास्ते ।

अभिनिविशश्च । ४७ ।

अभिनिपूर्वस्य विशतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममभिनिविशते । कथं कल्याणे ऽभिनिवेशः । पापे ऽभिनिवेशः । या या संज्ञा यस्मिन्यस्मिन्संज्ञिन्यभिनिविशत इति । अन्यतरस्यामिति वर्तते परिक्रयणे संप्रदानमन्यतरस्यामित्यतः (४४) । सा च व्यव
25 स्थितविभाषा विज्ञायते ।

उपान्वध्याङ्वसः । ४८ ।

उप अनु अधि आङ् इत्येवंपूर्वस्य वसतेराधारो यस्तत्कारकं कर्मसंज्ञं भवति । ग्राममुपवसति सेना । पर्वतमुपवसति । ग्राममनुवसति । ग्राममधिवसति । ग्राममावसति । वसेरश्यर्थस्य प्रतिषेधो वक्तव्यः (ein Vârttika) । ग्राम (d. i. ग्रामे) उपवसति । भोजननिवृ-
30 त्तिं करोतीत्यर्थः ।

कर्तुरीप्सिततमं कर्म । ४९ ।

कर्तुः क्रियया यदाप्तुमिष्टतमं तत्कारकं कर्मसंज्ञं भवति । कटं करोति । ग्रामं गच्छति । कर्तुरिति किम् । माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषा न कर्तुः । तमब्ग्रहणं किम् ।

पयसौदनं भुङ्क्ते । कर्मेत्यनुवर्तमाने पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम् । इतरथाधारस्यैव हि
स्यात् । गेहं प्रविशतीति । ओदनं पचति सक्तून्पिबतीत्यादिषु न स्यात् । पुनः कर्मग्रहणा-
त्सर्वत्र सिद्धं भवति । कर्मप्रदेशाः कर्मणि द्वितीयेत्येवमादयः (२ । ३ । २) ।

तथा युक्तं चानीप्सितम् । ५० ।

5 येन प्रकारेण कर्तुरीप्सिततमं क्रियया युज्यते तेनैव चेत्प्रकारेण यदनीप्सितं युक्तं
भवति तस्य कर्मसंज्ञा विधीयते । ईप्सितादन्यत्सर्वमनीप्सितं द्वेष्यमितरच्च । विषं भक्षय-
ति । चौरान्पश्यति । ग्रामं गच्छन्वृक्षमूलान्युपसर्पति ।

अकथितं च । ५१ ।

अकथितं च यत्कारकं तत्कर्मसंज्ञं भवति । केनाकथितम् । अपादानादिविशेषकथा-
10 भिः । परिगणनं कर्तव्यम् ।

दुहियाचिरुधिप्रच्छिभिक्षिचिञामुपयोगनिमित्तमपूर्वविधौ ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना ॥

उपयुज्यत इत्युपयोगः पयःप्रभृति । तस्य निमित्तं गवादि । तस्योपयुज्यमानपयःप्रभृति-
निमित्तस्य गवादेः कर्मसंज्ञा विधीयते । पाणिना कांस्यपात्र्यां गां दोग्धि पयः । पाण्यादि-
15 कमप्युपयोगनिमित्तम् । तस्य कस्मान्न भवति । नैतदस्ति । विहिता हि तत्र करणादि-
संज्ञा । तदर्थमाह । अपूर्वविधाविति । ब्रुविशासिगुणेन च यत्सचते । ब्रुविशास्योर्गुणः सा-
धनम् । प्रधानं कर्म धर्मादिकम् । तेन यत्संबध्यते तदकीर्तितमाचरितं कविना । तदकथि-
तमुक्तं सूत्रकारेण । दुहि । गां दोग्धि पयः । याचि । पौरवं गां याचते । रुधि । गामवरुणा-
द्धि व्रजम् । प्रच्छि । माणवकं पन्थानं पृच्छति । भिक्षि । पौरवं गां भिक्षते । चिञ् । वृक्षमव-
20 चिनोति फलानि । ब्रुवि । माणवकं धर्मं ब्रूते । शासि । माणवकं धर्ममनुशास्ति ।

गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ । ५२ ।

अर्थशब्दः प्रत्येकमभिसंबध्यते । गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां च धातूनां
तथा शब्दकर्मकाणामकर्मकाणां च अण्यन्तानां यः कर्ता स ण्यन्तानां कर्मसंज्ञो भवति । ग-
च्छति माणवको ग्रामम् । गमयति माणवकं ग्रामम् । याति माणवको ग्रामम् । यापयति
25 माणवकं ग्रामम् । गत्यर्थेषु नीवह्योः प्रतिषेधो वक्तव्यः (ein Vârttika) । नयति भारं देव-
दत्तः । नाययति भारं देवदत्तेन । वहति भारं देवदत्तः । वाहयति भारं देवदत्तेन । वहेरनि-
यन्तृकर्तृकस्येति वक्तव्यम् (ein Vârttika) । इह प्रतिषेधो मा भूत् । वहन्ति यवान्बली-
वर्दाः । वाहयति यवान्बलीवर्दानिति । बुद्धि । बुध्यते माणवको धर्मम् । बोधयति माणवकं
धर्मम् । वेत्ति माणवको धर्मम् । वेदयति माणवकं धर्मम् । प्रत्यवसानमभ्यवहारः । भुङ्क्ते
30 माणवक ओदनम् । भोजयति माणवकमोदनम् । अश्नाति माणवक ओदनम् । आशयति मा-
णवकमोदनम् । आदिखाद्योः प्रतिषेधो वक्तव्यः (ein Vârttika) । अत्ति माणवक ओद-
नम् । आदयते माणवकेनौदनम् । खादति माणवकः । खादयति माणवकेन । भक्षेरहिंसा-
र्थस्य प्रतिषेधो वक्तव्यः (ein Vârttika) । भक्षयति पिण्डीं देवदत्तः । भक्षयति पिण्डीं देव-

दत्तेनेति। अहिंसार्थस्येति किम्। भक्षयन्ति बलीवर्दाः सस्यम्। भक्षयति बलीवर्दान्सस्यम्।
शब्दकर्मणाम्। अधीते माणवको वेदम्। अध्यापयति माणवकं वेदम्। पठति माणवको
वेदम्। पाठयति माणवकं वेदम्। अकर्मकाणाम्। आस्ते देवदत्तः। आसयति देवदत्तम्।
शेते देवदत्तः। शाययति देवदत्तम्। एतेषामिति किम्। पचत्योदनं देवदत्तः। पाचयत्योदनं
5 देवदत्तेनेति। अण्यन्तानामिति किम्। गमयति देवदत्तो यज्ञदत्तम्। तमपरः प्रयुङ्क्ते। गम-
यति देवदत्तेन यज्ञदत्तं विष्णुमित्रः।

हृक्रोरन्यतरस्याम्। ५३।

अणिकर्ता स णाविति वर्तते। हरतेः करोतेश्चाण्यन्तयोर्यः कर्ता स ण्यन्तयोरन्यतर-
स्यां कर्मसंज्ञो भवति। हरति भारं माणवकः। हारयति भारं माणवकं माणवकेनेति वा।
10 करोति कटं देवदत्तः। कारयति कटं देवदत्तं देवदत्तेनेति वा। अभिवादिदृशोरात्मनेपद उप-
संख्यानम् (ein Vârttika)। अभिवदति गुरुं देवदत्तः। अभिवादयते गुरुं देवदत्तं देवदत्ते-
नेति वा। पश्यन्ति भृत्या राजानम्। दर्शयते भृत्यान्राजानं दर्शयते भृत्यैरिति वा। आत्मनेपद
इति किम्। दर्शयति चैत्रं मैत्रमपरः। प्राप्तविकल्पत्वाद्द्वितीयैव। अभिवादयति गुरुं माण-
वकेन पिता। अप्राप्तविकल्पत्वात्तृतीयैव।

15 स्वतन्त्रः कर्ता। ५४।

स्वतन्त्र इति प्रधानभूत उच्यते। अगुणीभूतो यः क्रियाप्रसिद्धौ स्वातन्त्र्येण विवक्ष्यते
तत्कारकं कर्तृसंज्ञं भवति। देवदत्तः पचति। स्थाली पचति। कर्तृप्रदेशाः कर्तृकरणयोस्तृ-
तीयेत्येवमादयः (२।३।१८)।

तत्प्रयोजको हेतुश्च। ५५।

20 तदित्यनन्तरः कर्ता परामृश्यते। तस्य प्रयोजकस्तत्प्रयोजकः। निपातनात्समासः (ge-
gen २।२।१६)। स्वतन्त्रस्य प्रयोजको यो ऽर्थस्तत्कारकं हेतुसंज्ञं भवति। चकारात्कर्तृ-
संज्ञं च। संज्ञासमावेशार्थश्चकारः। कुर्वाणं प्रयुङ्क्ते। कारयति। हारयति। हेतुत्वाण्णिचो नि-
मित्तं कर्तृत्वाच्च कर्तृप्रत्ययेनोच्यते। हेतुप्रदेशा हेतुमति चेत्येवमादयः (३।१।२६)।

अनभिहिते। २।३।१।

25 अनभिहित इत्यधिकारो ऽयं वेदितव्यः। यदित ऊर्ध्वमनुक्रमिष्यामो ऽनभिहित इत्येवं
तद्वेदितव्यम्। अनभिहिते ऽनुक्ते ऽनिर्दिष्टे कर्मादौ विभक्तिर्भवति। केनानभिहिते। ति-
ङ्कृत्तद्धितसमासैः परिसंख्यानम् (ein Vârttika)। वक्ष्यति कर्मणि द्वितीया (२)। कटं करो-
ति। ग्रामं गच्छति। अनभिहित इति किम्। तिङ्। क्रियते कटः। कृत्। कृतः कटः। त-
द्धितः। शत्यः (= शतमर्हति nach ५।१।६३)। समास। प्राप्तमुदकं यं ग्रामं स प्रा-
30 प्तोदको ग्रामः। परिसंख्यानं किम्। कटं करोति भीष्ममुदारं दर्शनीयम्। बहुषु बहुवच-
नम् (१।४।२१) इत्येवमादिना संख्या वाच्यत्वेन विभक्तीनामुपदिष्टा। तत्र विशेषणार्थमि-
दमारभ्यते। अनभिहितकर्मादिष्वर्थेष्वेकत्वादिषु द्वितीयादयो वेदितव्या इति।

कर्मणि द्वितीया। २।

द्वितीयादयः शब्दाः पूर्वाचार्यैः सुपां त्रिकेषु स्मर्यन्ते । तैरेवात्र व्यवहारः । कर्मणि कारके या संख्या तत्र द्वितीया विभक्तिर्भवति । कटं करोति । ग्रामं गच्छति ।

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततो ऽन्यत्रापि दृश्यते ॥

उभयतो ग्रामम् । सर्वतो ग्रामम् । धिग्देवदत्तम् । उपर्युपरि ग्रामम् । अध्यधि ग्रामम् । अधो ऽधो ग्रामम् । अभितःपरितःसमयानिकषाहाप्रतियोगेषु च दृश्यते (ein Vârttika) । अभितो ग्रामम् । परितो ग्रामम् । समया ग्रामम् । निकषा ग्रामम् । हा देवदत्तम् । न बुभुक्षितं प्रति भाति किं चित् ।

तृतीया च होश्छन्दसि । ३ ।

कर्मणीति वर्तते । द्वितीयायां प्राप्तायां तृतीया विधीयते । चशब्दात्सा च भवति । छन्दसि विषये जुहोतेः कर्मणि कारके तृतीया विभक्तिर्भवति द्वितीया च । यवाग्वाग्निहोत्रं जुहोति । यवागूमग्निहोत्रं जुहोति । छन्दसीति किम् । यवागूमग्निहोत्रं जुहोति ।

अन्तरान्तरेणयुक्ते । ४ ।

द्वितीया स्वर्यते न तृतीया । अन्तरान्तरेणशब्दौ निपातौ साहचर्याद्गृह्येते । आभ्यां योगे द्वितीया विभक्तिर्भवति । षष्ठ्यपवादो योगः । तत्रान्तराशब्दो मध्यमाधेयप्रधानमाचष्टे । अन्तरेणशब्दस्तु तच्च विनार्थं च । अन्तरा त्वां च मां च कमण्डलुः । अन्तरेण त्वां च मां च कमण्डलुः । अन्तरेण पुरुषकारं न किं चिल्लभ्यते । युक्तग्रहणं किम् । अन्तरा तक्षशिलां च पाटलिपुत्रं च स्रुघ्नस्य प्राकारः ।

कालाध्वनोरत्यन्तसंयोगे । ५ ।

कालशब्देभ्यो ऽध्वशब्देभ्यश्च द्वितीया विभक्तिर्भवत्यत्यन्तसंयोगे गम्यमाने । क्रियागुणद्रव्यैः साकल्येन कालाध्वनोः संबन्धो ऽत्यन्तसंयोगः । मासमधीते । संवत्सरमधीते । मासं कल्याणी । संवत्सरं कल्याणी । मासं गुडधानाः । संवत्सरं गुडधानाः । अध्वनः खल्वपि । क्रोशमधीते । योजनमधीते । क्रोशं कुटिला नदी । योजनं कुटिला नदी । क्रोशं पर्वतः । योजनं पर्वतः । अत्यन्तसंयोग इति किम् । मासस्य द्विरधीते । क्रोशस्यैकदेशे पर्वतः ।

अपवर्गे तृतीया । ६ ।

कालाध्वनोरत्यन्तसंयोग इति वर्तते । अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्तिः । अपवर्गे गम्यमाने कालाध्वनोरत्यन्तसंयोगे तृतीया विभक्तिर्भवति । मासेनानुवाको ऽधीतः । संवत्सरेणानुवाको ऽधीतः । अध्वनः । क्रोशेनानुवाको ऽधीतः । योजनेनानुवाको ऽधीतः । अपवर्ग इति किम् । क्रोशमधीतो ऽनुवाकः । मासमधीतः । कर्तृव्यावृत्तौ फलसिद्धेरभावात्तृतीया न भवति । मासमधीतो ऽनुवाको न चानेन गृहीतः ।

सप्तमीपञ्चम्यौ कारकमध्ये । ७ ।

कालाध्वनोरिति वर्तते । कारकयोर्मध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ विभक्ती भवतः । अद्य भुक्त्वा देवदत्तो द्व्यहे द्व्यहाद्वा भोक्ता । त्र्यहे त्र्यहाद्भोक्ता । कर्तृशक्त्यो-

मध्ये कालः। इहस्थो ऽयमिष्वासः क्रोशे लक्ष्यं विध्यति। क्रोशाल्लक्ष्यं विध्यति। कर्तृकर्मणोः कारकयोः कर्मापादानयोः कर्माधिकरणयोर्वा मध्ये क्रोशः। संख्यातानुदेशो न भवत्यस्वरितत्वात्।

कर्मप्रवचनीययुक्ते द्वितीया। ८।

5 कर्मप्रवचनीयैर्युक्ते द्वितीया विभक्तिर्भवति। अनुर्लक्षणे। शाकल्यस्य संहितामनु प्रावर्षत्। आगस्त्यमन्वसिञ्चत्प्रजाः।

यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी। ९।

कर्मप्रवचनीययुक्त इति वर्तते। यस्मादधिकं यस्य चेश्वरवचनं कर्मप्रवचनीयैर्युक्ते तत्र सप्तमी विभक्तिर्भवति। उप खार्यां द्रोणाः। उप निष्के कार्षापणम्। यस्य चेश्वरवचनमिति

10 स्वस्वामिनोर्द्वयोरपि पर्यायेण सप्तमी विभक्तिर्भवति। अधि ब्रह्मदत्ते पञ्चालाः। अधि पञ्चालेषु ब्रह्मदत्त इति। द्वितीयापवादो योगः।

पञ्चम्यपाङ्परिभिः। १०।

अप आङ् परि इत्येतैः कर्मप्रवचनीयैर्योगे पञ्चमी विभक्तिर्भवति। अप त्रिगर्तेभ्यो वृष्टो देवः। आ पाटलिपुत्राद्वृष्टो देवः। परि परि त्रिगर्तेभ्यो वृष्टो देवः। अपेन साहचर्या-

15 त्परेर्वर्जनार्थस्य ग्रहणम्। तेनेह न भवति। वृक्षं परि विद्योतते विद्युत्।

प्रतिनिधिप्रतिदाने च यस्मात्। ११।

मुख्यसदृशः प्रतिनिधिः। दत्तस्य प्रतिनिर्यातनं प्रतिदानम्। यस्मात्प्रतिनिधिर्यतश्च प्रतिदानं तत्र कर्मप्रवचनीययुक्ते पञ्चमी विभक्तिर्भवति। अभिमन्युरर्जुनतः प्रति। प्रद्युम्नो वासुदेवतः प्रति। माषानस्मै तिलेभ्यः प्रति यच्छति। ननु च प्रतिनिधिप्रतिदाने कर्मप्र-

20 वचनीययुक्ते न तु यतः प्रतिनिधिप्रतिदाने। नैष दोषः। संबन्धसंबन्धात्तस्यापि योगो ऽस्त्येव।

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि। १२।

गत्यर्थानां धातूनां चेष्टाक्रियाणां परिस्पन्दक्रियाणां कर्मणि कारके ऽध्ववर्जिते द्वितीयाचतुर्थ्यौ भवतः। ग्रामं गच्छति। ग्रामाय गच्छति। ग्रामं व्रजति। ग्रामाय व्रजति।

25 गत्यर्थग्रहणं किम्। ओदनं पचति। कर्मणीति किम्। अश्वेन व्रजति। चेष्टायामिति किम्। मनसा पाटलिपुत्रं गच्छति। अनध्वनीति किम्। अध्वानं गच्छति। अध्वन्यर्थग्रहणम्। पन्थानं गच्छति। मार्गं गच्छति। आस्थितप्रतिषेधश्चायं विज्ञेयः। आस्थितः संप्राप्त आक्रान्त उच्यते। यत्रोत्पथेन पन्थानं गच्छति तत्र भवितव्यमेव चतुर्थ्या। पथे गच्छतीति। द्वितीयाग्रहणं किम्। न चतुर्थ्येव विकल्प्येत। अपवादविषये ऽपि यथा स्यात्। ग्रामं गन्ता।

30 ग्रामाय गन्ता। कृद्योगलक्षणा षष्ठी न भवति (६५)।

चतुर्थी संप्रदाने। १३।

संप्रदाने कारके चतुर्थी विभक्तिर्भवति। उपाध्यायाय गां ददाति। माणवकाय भिक्षां ददाति। देवदत्ताय रोचते। पुष्पेभ्यः स्पृहयतीत्यादि। चतुर्थीविधाने तादर्थ्य उपसंख्या-

नम् (ein Vârttika)। यूपाय दारु। कुण्डलाय हिरण्यम्। रन्धनाय स्थाली। अवहननायोलूखलम्। क्लृपिसंपद्यमाने चतुर्थी वक्तव्या (ein Vârttika)। मूत्राय कल्पते यवागूः। उच्चाराय कल्पते यवागूः। क्लृपीत्यर्थनिर्देशः। मूत्राय संपद्यते यवागूः। मूत्राय जायते यवागूः। उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या (ein Vârttika)।

वाताय कपिला विद्युदातपायातिलोहिनी।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्॥

हितयोगे चतुर्थी वक्तव्या (ein Vârttika)। गोभ्यो हितम्। अरोचकिने हितम्।

क्रियार्थोपपदस्य च कर्मणि स्थानिनः। १४।

क्रिया क्रियार्था उपपदं यस्य सो ऽयं क्रियार्थोपपदः। तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (३।३।१०) इत्येष विषयो लक्ष्यते। क्रियार्थोपपदस्य च स्थानिनो ऽप्रयुज्यमानस्य धातोः कर्मणि कारके चतुर्थी विभक्तिर्भवति। द्वितीयापवादो योगः। एधेभ्यो व्रजति। पुष्पेभ्यो व्रजति। क्रियार्थोपपदस्येति किम्। प्रविश पिण्डीम्। प्रविश तर्पणम्। भक्षिरत्र स्थानी न तु क्रियार्थोपपदः। कर्मणीति किम्। एधेभ्यो व्रजति शकटेन। स्थानिन इति किम्। एधानाहर्तुं व्रजति।

तुमर्थाच्च भाववचनात्। १५।

तुमुना समानार्थस्तुमर्थः। तुमर्थभाववचनप्रत्ययान्तात्प्रातिपदिकाच्चतुर्थी विभक्तिर्भवति। (३।३।११) भाववचनाश्चेति वक्ष्यति। तस्येदं ग्रहणम्। पाकाय व्रजति। त्यागाय व्रजति। भूतये व्रजति। संपत्तये व्रजति। तुमर्थादिति किम्। पाकस्त्यागो रागः। भाववचनादिति किम्। कारको व्रजति।

नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च। १६।

नमः स्वस्ति स्वाहा स्वधा अलं वषट् इत्येतैर्योगे चतुर्थी विभक्तिर्भवति। नमो देवेभ्यः। स्वस्ति प्रजाभ्यः। स्वाहाग्नये। स्वधा पितृभ्यः। अलं मल्लो मल्लाय। अलमिति पर्याप्त्यर्थग्रहणम्। प्रभुर्मल्लो मल्लाय। शक्तो मल्लो मल्लाय। वषडग्नये। वषडिन्द्राय। चकारः पुनरस्यैव समुच्चयार्थः। तेनाशीर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति। स्वस्ति गोभ्यो भूयात्। स्वस्ति ब्राह्मणेभ्यः।

मन्यकर्मण्यनादरे विभाषाप्राणिषु। १७।

मन्यतेः कर्मणि मन्यकर्मणि। मन्यकर्मणि प्राणिवर्जिते विभाषा चतुर्थी विभक्तिर्भवत्यनादरे गम्यमाने। अनादरस्तिरस्कारः। न त्वा तृणं मन्ये। न त्वा तृणाय मन्ये। न त्वा बुसं मन्ये। न त्वा बुसाय मन्ये। मन्यतिग्रहणं किम्। न त्वा तृणं चिन्तयामि। विकरणनिर्देशः किमर्थः। न त्वा तृणं मन्वे। अनादर इति किम्।

अश्मानं दृषदं मन्ये मन्ये काष्ठमुलूखलम्।
अन्धायास्तं सुतं मन्ये यस्य माता न पश्यति॥

अप्राणिष्विति किम्। न त्वा मृगालं मन्ये। यदेतदप्राणिष्विति तदनावादिष्विति वक्त-

व्यम्। व्यवस्थितविभाषा च ज्ञेया। न त्वा नावं मन्ये यावत्तीर्णां न नाव्यम्। न त्वान्नं मन्ये यावन्न भुक्तं श्राद्धम्। प्राणिषु तूभयम्। न त्वा काकं मन्ये। न त्वा सृगालं मन्ये। इह चतुर्थी द्वितीया च भवतः। न त्वा श्वानं मन्ये। न त्वा शुने मन्ये। युष्मदः कस्मान्न भवति चतुर्थी। एतदपि हि मन्यतेः कर्म। व्यवस्थितविभाषाविज्ञानादेव न भवति।

5 कर्तृकरणयोस्तृतीया। १८।

कर्तरि करणे च कारके तृतीया विभक्तिर्भवति। देवदत्तेन कृतम्। यज्ञदत्तेन भुक्तम्। करणे। दात्रेण लुनाति। परशुना छिनत्ति। तृतीयाविधाने प्रकृत्यादीनामुपसंख्यानम्। प्रकृत्याभिरूपः। प्रकृत्या दर्शनीयः। प्रायेण याज्ञिकः। प्रायेण वैयाकरणः। गार्ग्यो ऽस्मि गोत्रेण। समेन धावति। विषमेण धावति। द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून्क्री-
10 णाति। सहस्रेण पशून्क्रीणाति।

सहयुक्ते ऽप्रधाने। १९।

सहार्थेन युक्ते ऽप्रधाने तृतीया विभक्तिर्भवति। पुत्रेण सहागतः पिता। पुत्रेण सह गोमान्। पितुरत्र क्रियादिसंबन्धः शब्देनोच्यते पुत्रस्य तु प्रतीयमान इति तस्याप्राधान्यम्। सहार्थेन च योगे विधानात्पर्यायप्रयोगे ऽपि भवति। पुत्रेण सार्धमिति। विनापि सहश-
15 ब्देन भवति। वृद्धो यूनेति निर्दर्शनात्। अप्रधान इति किम्। शिष्येण सहोपाध्यायस्य गौः।

येनाङ्गविकारः। २०।

अङ्गशब्दो ऽत्राङ्गसमुदाये शरीरे वर्तते। येनेति च तदवयवो हेतुत्वेन निर्दिश्यते। येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते ततस्तृतीया विभक्तिर्भवति। अक्ष्णा काणः। पादेन खञ्जः। पाणिना कुणिः। अवयवधर्मेण समुदायो व्यपदिश्यते। अङ्गविकार इति
20 किम्। अक्षि काणमस्य।

इत्थंभूतलक्षणे। २१।

कं चित्प्रकारं प्राप्त इत्थंभूतः। तस्य लक्षणमित्थंभूतलक्षणम्। ततस्तृतीया विभक्तिर्भवति। अपि भवान्कमण्डलुना छात्रमद्राक्षीत्। छात्त्रेणोपाध्यायम्। शिखया परिव्राजकम्। इह न भवति। कमण्डलुपाणिश्छात्त्र इति। लक्षणस्य समासे ऽन्तर्भूतत्वात्। इत्थंभूत
25 इति किम्। वृक्षं प्रति विद्योतनम्।

संज्ञो ऽन्यतरस्यां कर्मणि। २२।

संपूर्वस्य जानातेः कर्मणि कारके द्वितीयायां प्राप्तायामन्यतरस्यां तृतीया विभक्तिर्भवति। पित्रा संजानीते। पितरं संजानीते।

हेतौ। २३।

30 फलसाधनयोग्यः पदार्थो लोके हेतुरुच्यते। तद्वाचिनस्तृतीया विभक्तिर्भवति। धनेन कुशलम्। कन्यया शोकः। विद्यया यशः।

अकर्तर्यृणे पञ्चमी। २४।

हेताविति वर्तते। कर्तृवर्जितं यदृणं हेतुस्ततः पञ्चमी विभक्तिर्भवति। तृतीयापवादो

योगः। शताद्बद्धः। सहस्राद्बद्धः। अकर्तरीति किम्। शतेन बन्धितः। शतमृणं च भवति प्रयोजकत्वाच्च कर्तृसंज्ञम्।

विभाषा गुणेऽस्त्रियाम्। २५।

हेताविति वर्तते। गुणे हेतावस्त्रीलिङ्गे विभाषा पञ्चमी विभक्तिर्भवति। जाड्याद्बद्धः।
5 जाड्येन बद्धः। पाण्डित्यान्मुक्तः। पाण्डित्येन मुक्तः। गुणग्रहणं किम्। धनेन कुशलम्। अस्त्रियामिति किम्। बुद्ध्या मुक्तः। प्रज्ञया मुक्तः।

षष्ठी हेतुप्रयोगे। २६।

हेतोः प्रयोगो हेतुप्रयोगः। हेतुशब्दस्य प्रयोगे हेतौ द्योत्ये षष्ठी विभक्तिर्भवति। अन्नस्य हेतोर्वसति।

10 सर्वनाम्नस्तृतीया च। २७।

सर्वनाम्नो हेतुशब्दप्रयोगे हेतौ द्योत्ये तृतीया विभक्तिर्भवति षष्ठी च। पूर्वेण षष्ठ्यामेव प्राप्तायामिदमुच्यते। कस्य हेतोर्वसति। केन हेतुना वसति। यस्य हेतोर्वसति। येन हेतुना वसति। निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्। किं निमित्तं वसति। केन निमित्तेन वसति। कस्मै निमित्ताय वसति। कस्मान्निमित्ताद्वसति। कस्य निमित्तस्य वस-
15 ति। कस्मिन्निमित्ते वसति। एवं कारणहेत्वोरप्युदाहार्यम्। अर्थग्रहणं चैतत्। पर्यायोपादानं तु स्वरूपविधिर्मा विज्ञायीति। तेनेहापि भवति। किं प्रयोजनं वसति। केन प्रयोजनेन वसति। कस्मै प्रयोजनाय वसति। कस्मात्प्रयोजनाद्वसति। कस्य प्रयोजनस्य वसति। कस्मिन्प्रयोजने वसति।

अपादाने पञ्चमी। २८।

20 अपादाने कारके पञ्चमी विभक्तिर्भवति। ग्रामादागच्छति। पर्वतादवरोहति। वृकेभ्यो बिभेति। अध्ययनात्पराजयते। पञ्चमीविधाने ल्यब्लोपे कर्मण्युपसंख्यानम्। प्रासादमारुह्य प्रेक्षते। प्रासादात्प्रेक्षते। आसनात्प्रेक्षते। शयनात्प्रेक्षते। प्रश्नाख्यानयोश्च पञ्चमी वक्तव्या। कुतो भवान्। पाटलिपुत्रात्। यतश्चाध्वकालनिर्माणं तत्र पञ्चमी वक्तव्या। गवीधुमतः सांकाश्यं चत्वारि योजनानि। कार्त्तिक्या आग्रहायणी मासे। अध्वनः प्रथमा सप्तमी
25 च वक्तव्या। गवीधुमतः सांकाश्यं चत्वारि योजनानि चतुर्षु योजनेषु वा।

अन्यारादितरर्तेदिक्छब्दाञ्चूत्तरपदाजाहियुक्ते। २९।

अन्य आरात् इतर ऋते दिक्छब्द अञ्चूत्तरपद आच् आहि इत्येतैर्योगे पञ्चमी विभक्तिर्भवति। अन्य इत्यर्थग्रहणम्। तेन पर्यायप्रयोगेऽपि भवति। अन्यो देवदत्तात्। भिन्नो देवदत्तात्। अर्थान्तरं देवदत्तात्। विलक्षणो देवदत्तात्। आराच्छब्दो दूरान्तिकार्थे वर्तते।
30 तत्र दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम् (२४) इति प्राप्ते पञ्चमी विधीयते। आराद्देवदत्तात्। इतर इति निर्दिश्यमानप्रतियोगी पदार्थ उच्यते। इतरो देवदत्तात्। ऋत इत्यव्ययं वर्जनार्थे। ऋते देवदत्तात्। दिक्छब्दः। पूर्वो ग्रामात्। उत्तरो ग्रामात्। पूर्वो ग्रीष्माद्वसन्तः। उत्तरो ग्रीष्मो वसन्तात्। दिक्छब्द इत्यत्र शब्दग्रहणं देशकालवृत्तिनापि दिक्छब्देन योगे

यथा स्यात्। इतरथा हि दिग्वृत्तिरेव स्यात्। इयमस्याः पूर्वेति। इह तु न स्यात्। अयमस्मात्पूर्वः काल इति। अञ्चूत्तरपद। प्राग्ग्रामात्। प्रत्यग्ग्रामात्। ननु चायमपि दिक्शब्द एव। षष्ठ्यतसर्थप्रत्ययेनेति (३०) वक्ष्यति। तस्यायं पुरस्तादपकर्षः। आच्। दक्षिणा ग्रामात्। उत्तरा ग्रामात्। आहि। दक्षिणाहि ग्रामात्। उत्तराहि ग्रामात्।

षष्ठ्यतसर्थप्रत्ययेन। ३०।

दक्षिणोत्तराभ्यामतसुजिति (५।३।२८) वक्ष्यति। तस्येदं ग्रहणम्। अतसर्थेन प्रत्ययेन युक्ते षष्ठी विभक्तिर्भवति। दक्षिणतो ग्रामस्य। उत्तरतो ग्रामस्य। पुरस्ताद्ग्रामस्य। उपरि ग्रामस्य। उपरिष्टाद्ग्रामस्य।

एनपा द्वितीया। ३१।

एनबन्यतरस्यामदूरेऽपञ्चम्या (५।३।३५) इति वक्ष्यति। तेन युक्ते द्वितीया विभक्तिर्भवति। पूर्वेण षष्ठ्यां प्राप्तायामिदं वचनम्। दक्षिणेन ग्रामम्। उत्तरेण ग्रामम्। षष्ठ्यपीष्यते। दक्षिणेन ग्रामस्य। उत्तरेण ग्रामस्य। तदर्थं योगविभागः कर्तव्यः।

पृथग्विनानानाभिस्तृतीयान्यतरस्याम्। ३२।

पञ्चमीग्रहणमनुवर्तते। पृथक् विना नाना इत्येतैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्यां पञ्चमी च। पृथग्देवदत्तेन। पृथग्देवदत्तात्। विना देवदत्तेन। विना देवदत्तात्। नाना देवदत्तेन। नाना देवदत्तात्। पृथग्विनानानाभिरिति योगविभागो द्वितीयार्थः।

विना वातं विना वर्षं विद्युत्प्रपतनं विना।
विना हस्तिकृतान्दोषान्केनेमौ पातितौ द्रुमौ॥

करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य। ३३।

स्तोक अल्प कृच्छ्र कतिपय इत्येतेभ्योऽसत्त्ववचनेभ्यः करणे कारकेऽन्यतरस्यां तृतीया भवति। पञ्चम्यत्र पक्षे विधीयते। तृतीया तु करण (१८) इत्येव सिद्धा। यदा तु धर्ममात्रं करणतया विवक्ष्यते न द्रव्यं तदा स्तोकादीनामसत्त्ववचनता। स्तोकान्मुक्तः। स्तोकेन मुक्तः। अल्पान्मुक्तः। अल्पेन मुक्तः। कृच्छ्रान्मुक्तः। कृच्छ्रेण मुक्तः। कतिपयान्मुक्तः। कतिपयेन मुक्तः। असत्त्ववचनस्येति किम्। स्तोकेन विषेण हतः। अल्पेन मधुना मत्तः। करण इति किम्। क्रियाविशेषणे कर्मणि मा भूत्। स्तोकं मुञ्चति।

दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्। ३४।

पञ्चम्यनुवर्तते। दूरान्तिकार्थैः शब्दैर्योगे षष्ठी विभक्तिर्भवत्यन्यतरस्यां पञ्चमी च। दूरं ग्रामात्। दूरं ग्रामस्य। विप्रकृष्टं ग्रामात्। विप्रकृष्टं ग्रामस्य। अन्तिकं ग्रामात्। अन्तिकं ग्रामस्य। अभ्याशं ग्रामात्। अभ्याशं ग्रामस्य। अन्यतरस्यांग्रहणं पञ्चम्यर्थम्। इतरथा हि तृतीया पक्षे स्यात्।

दूरान्तिकार्थेभ्यो द्वितीया च। ३५।

पञ्चम्यनुवर्तते। दूरान्तिकार्थेभ्यः शब्देभ्यो द्वितीया विभक्तिर्भवति। चकारात्पञ्चमी तृतीयापि समुच्चीयते। दूरं ग्रामस्य। दूराद्ग्रामस्य। दूरेण ग्रामस्य। अन्तिकं ग्रामस्य।

अन्तिकाद्ग्रामस्य । अन्तिकेन ग्रामस्य । प्रातिपदिकार्थे (२ । ३ । ४६) विधानम् । असत्त्ववचन-
प्रकरणं चानुवर्तते । सत्त्वशब्देभ्यो यथायथं विभक्तयो भवन्ति । दूरः पन्थाः । दूराय पथे
देहि । दूरस्य पथः स्वम् ।

सप्तम्यधिकरणे च । ३६ ।

5 सप्तमी विभक्तिर्भवत्यधिकरणे कारके । चकाराद्दूरान्तिकार्थेभ्यश्च । कट आस्ते । शकट
आस्ते । स्थाल्यां पचति । दूरान्तिकार्थेभ्यः खल्वपि । दूरे ग्रामस्य । अन्तिके ग्रामस्य ।
अभ्याशे ग्रामस्य । दूरान्तिकार्थेभ्यश्चतस्रो विभक्तयो भवन्ति । द्वितीयातृतीयापञ्चमीस-
प्तम्यः । सप्तमीविधाने क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् । अधीती व्याकरणे । परिग-
णिती याज्ञिक्ये । आम्नाती छन्दसि । साध्वसाधुप्रयोगे च सप्तमी वक्तव्या । साधुर्देवदत्तो
10 मातरि । असाधुः पितरि । कारकार्हाणां च कारकत्वे सप्तमी वक्तव्या । ऋद्धेषु भुञ्जानेषु द-
रिद्रा आसते । ब्राह्मणेषु तरत्सु वृषला आसते । अकारकार्हाणां चाकारकत्वे सप्तमी वक्त-
व्या । दरिद्रेष्वासीनेषु ऋद्धा भुञ्जते । वृषलेष्वासीनेषु ब्राह्मणास्तरन्ति । तद्विपर्यासे च सप्त-
मी वक्तव्या । ऋद्धेष्वासीनेषु दरिद्रा भुञ्जते । ब्राह्मणेष्वासीनेषु वृषलास्तरन्ति । निमित्ता-
त्कर्मसंयोगे सप्तमी वक्तव्या ।

15 चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

यस्य च भावेन भावलक्षणम् । ३७ ।

सप्तमीति वर्तते । भावः क्रिया । यस्य च भावेन यस्य च क्रियया क्रियान्तरं लक्ष्यते
ततो भाववतः सप्तमी विभक्तिर्भवति । प्रसिद्धा च क्रिया क्रियान्तरं लक्षयति । गोषु दुह्य-
20 मानासु गतः । दुग्धास्वागतः । अग्निषु हूयमानेषु गतः । हुतेष्वागतः । भावेनेति किम् । यो
जटाभिः स भुङ्क्ते । पुनर्भावग्रहणं किम् । यो भुङ्क्ते स देवदत्तः ।

षष्ठी चानादरे । ३८ ।

पूर्वेण सप्तम्यां प्राप्तायां षष्ठी विधीयते । चकारात्सापि भवति । अनादराधिके भाव-
लक्षणे भाववतः षष्ठीसप्तम्यौ विभक्ती भवतः । रुदतः प्राव्राजीत् । रुदति प्राव्राजीत् । क्रो-
25 शतः प्राव्राजीत् । क्रोशति प्राव्राजीत् । क्रोशन्तमनादृत्य प्रव्रजित इत्यर्थः ।

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च । ३९ ।

षष्ठीसप्तम्यौ वर्तेते । स्वामिन् ईश्वर अधिपति दायाद साक्षिन् प्रतिभू प्रसूत इत्येतै-
र्योगे षष्ठीसप्तम्यौ विभक्ती भवतः । गवां स्वामी । गोषु स्वामी । गवामीश्वरः । गोष्वी-
श्वरः । गवामधिपतिः । गोष्वधिपतिः । गवां दायादः । गोषु दायादः । गवां साक्षी । गोषु
30 साक्षी । गवां प्रतिभूः । गोषु प्रतिभूः । गवां प्रसूतः । गोषु प्रसूतः । षष्ठ्यामेव प्राप्तायां पक्षे
सप्तमीविधानार्थं वचनम् ।

आयुक्तकुशलाभ्यां चासेवायाम् । ४० ।

षष्ठीसप्तम्यौ वर्तेते । आयुक्तो व्यापारितः । कुशलो निपुणः । ताभ्यां योग आसेवायां

गम्यमानायां षष्ठीसप्तम्यौ विभक्ती भवतः । आसेवा तात्पर्यम् । आयुक्तः कटकरणस्य ।
आयुक्तः कटकरणे । कुशलः कटकरणस्य । कुशलः कटकरणे । आसेवायामिति किम् । आ-
युक्तो गौः शकटे । ईषद्युक्त इत्यर्थः । तत्र सप्तम्येवाधिकरणे भवति ।

यतश्च निर्धारणम् । ४१ ।

5 षष्ठीसप्तम्यौ वर्तेते । जातिगुणक्रियाभिः समुदायादेकदेशस्य पृथक्करणं निर्धारणम् ।
यतो निर्धारणं ततः षष्ठीसप्तम्यौ विभक्ती भवतः । मनुष्याणां क्षत्रियः शूरतमः । मनुष्येषु
क्षत्रियः शूरतमः । गवां कृष्णा संपन्नक्षीरतमा । गोषु कृष्णा संपन्नक्षीरतमा । अध्वगानां धा-
वन्तः शीघ्रतमाः । अध्वगेषु धावन्तः शीघ्रतमाः ।

पञ्चमी विभक्ते । ४२ ।

10 यतश्च निर्धारणमिति वर्तते । षष्ठीसप्तम्यपवादो योगः । विभागो विभक्तम् । यस्मि-
न्निर्धारणाश्रये विभक्तमस्ति ततः पञ्चमी विभक्तिर्भवति । माथुराः पाटलिपुत्रेभ्यः सुकुमा-
रतराः । आढ्यतराः ।

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । ४३ ।

साधु निपुण इत्येताभ्यां योगे ऽर्चायां गम्यमानायां सप्तमी विभक्तिर्भवति । न चेत्प्रतिः
15 प्रयुज्यते । मातरि साधुः । मातरि निपुणः । अर्चायामिति किम् । साधुर्भृत्यो राज्ञः । तत्त्व-
कथने न भवति । अप्रतेरिति किम् । साधुर्देवदत्तो मातरं प्रति । अप्रत्यादिभिरिति वक्त-
व्यम् । साधुर्देवदत्तो मातरं परि । मातरमनु ।

प्रसितोत्सुकाभ्यां तृतीया च । ४४ ।

प्रसित उत्सुक इत्येताभ्यां योगे तृतीया विभक्तिर्भवति । चकारात्सप्तमी च । प्रसितः
20 प्रसक्तः । यस्तत्र नित्यमेवावबद्धः स उच्यते । केशैः प्रसितः । केशेषु प्रसितः । केशैरु-
त्सुकः । केशेषूत्सुकः ।

नक्षत्रे च लुपि । ४५ ।

तृतीयासप्तम्यावनुवर्तेते । लुबन्तान्नक्षत्रशब्दात्तृतीयासप्तम्यौ विभक्ती भवतः । पुष्येण
पायसमश्नीयात् । पुष्ये पायसमश्नीयात् । मघाभिः पललौदनं । मघासु पललौदनम् । नक्षत्र
25 इति किम् । पञ्चालेषु वसति । लुपीति किम् । मघासु ग्रहः । इह कस्मान्न भवति । अद्य
पुष्यः । अद्य कृत्तिका । अधिकरण इति वर्तते । वचनं तु पक्षे तृतीयाविधानार्थम् ।

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । ४६ ।

प्रातिपदिकार्थः सत्ता । लिङ्गं स्त्रीलिङ्गपुंलिङ्गनपुंसकानि । परिमाणं प्रस्थादि । वच-
नमेकत्वद्वित्वबहुत्वानि । मात्रशब्दः प्रत्येकमभिसंबध्यते । प्रातिपदिकार्थमात्रे लिङ्गमात्रे
30 परिमाणमात्रे वचनमात्रे प्रथमा विभक्तिर्भवति । प्रातिपदिकार्थमात्रे । उच्चैः । नीचैः । लि-
ङ्गग्रहणं किम् । कुमारी वृक्षः कुण्डमित्यत्रापि यथा स्यात् । परिमाणग्रहणं किम् । द्रोणः
खारि आढकमित्यत्रापि यथा स्यात् । वचनग्रहणं किम् । एकत्वादिषूक्तेष्वपि यथा स्यात् ।
एकः । द्वौ । बहवः । प्रातिपदिकग्रहणं किम् । निपातस्यानर्थकस्य प्रातिपदिकत्वमु-

क्तम् (in einem Vârttika zu P. 1,2,45) । ततो ऽपि यथा स्यात् । प्रलम्बते । अ-ध्यागच्छति ।

संबोधने च । ४७ ।

आभिमुख्यकरणं संबोधनम् । तदधिके प्रातिपदिकार्थे प्रथमा न प्राप्नोतीति वचनमा-
5 रभ्यते । संबोधने च प्रथमा विभक्तिर्भवति । हे देवदत्त । हे देवदत्तौ । हे देवदत्ताः ।

सामन्त्रितम् । ४८ ।

संबोधने या प्रथमा तदन्तं शब्दरूपमामन्त्रितसंज्ञं भवति । तथा चैवोदाहृतम् । आम-न्त्रितप्रदेशा आमन्त्रितं पूर्वमविद्यमानवदित्येवमादयः (८ । १ । ७२) ।

एकवचनं संबुद्धिः । ४९ ।

10 आमन्त्रितप्रथमाया यदेकवचनं तत्संबुद्धिसंज्ञं भवति । हे पटो । हे देवदत्त । संबुद्धि-प्रदेशा एङ्ह्रस्वात्संबुद्धेरित्येवमादयः (६ । १ । ६९) ।

षष्ठी शेषे । ५० ।

कर्मादिभ्यो ऽन्यः प्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिसंबन्धादिः शेषः । तत्र षष्ठी विभक्तिर्भवति । राज्ञः पुरुषः । पशोः पादः । पितुः पुत्रः ।

15 ज्ञो ऽविदर्थस्य करणे । ५१ ।

जानातेरविदर्थस्याज्ञानार्थस्य करणे कारके षष्ठी विभक्तिर्भवति । सर्पिषो जानीते । मधुनो जानीते । सर्पिषा करणेन प्रवर्तत इत्यर्थः । प्रवृत्तिवचनो जानातिरविदर्थः । अथ वा मिथ्याज्ञानवचनः । सर्पिषि रक्तः प्रतिहतो वा । चित्तभ्रान्त्या तदात्मना सर्वमेव ग्राह्यं प्रतिपद्यते । मिथ्याज्ञानमज्ञानमेव । अविदर्थस्येति किम् । स्वरेण पुत्रं जानाति ।

20 अधीगर्थदयेशां कर्मणि । ५२ ।

शेष इति वर्तते । अधीगर्थाः स्मरणार्थाः । दय दानगतिरक्षणेषु । ईश ऐश्वर्ये । एतेषां कर्मणि कारके शेषत्वेन विवक्षिते षष्ठी विभक्तिर्भवति । मातुरध्येति । मातुः स्मरति । स-र्पिषो दयते । सर्पिष ईष्टे । मधुन ईष्टे । कर्मणीति किम् । मातुर्गुणैः स्मरति । शेष इति किम् । मातरं स्मरति ।

25 कृञः प्रतियत्ने । ५३ ।

सतो गुणान्तराधानं प्रतियत्नः । करोतेः कर्मणि कारके शेषत्वेन विवक्षिते प्रतियत्ने गम्यमाने षष्ठी विभक्तिर्भवति । एधोदकस्योपस्कुरुते । शस्त्रपत्रस्योपस्कुरुते । प्रतियत्न इति किम् । कटं करोति । कर्मणीति किम् । एधोदकस्योपस्कुरुते प्रज्ञया । शेष इत्येव । एधोदकमुपस्कुरुते ।

30 रुजार्थानां भाववचनानामज्वरेः । ५४ ।

रुजार्थानां धातूनां भाववचनानां भावकर्तृकाणां ज्वरिवर्जितानां कर्मणि कारके शेष-त्वेन विवक्षिते षष्ठी विभक्तिर्भवति । चौरस्य रुजति रोगः । चौरस्यामयत्यामयः । रुजा-र्थानामिति किम् ।

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥

भाववचनानामिति किम् । नदी कूलानि रुजति । अज्वरेरिति किम् । चौरं ज्वरयति
ज्वरः । अज्वरिसंताप्योरिति वक्तव्यम् । चौरं संतापयति तापः । शेष इत्येव । चौरं रुजति
5 रोगः ।

आशिषि नाथः । ५५ ।

नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु पठ्यते । तस्याशीःक्रियस्य कर्मणि कारके शेषत्वेन
विवक्षिते षष्ठी विभक्तिर्भवति । सर्पिषो नाथते । मधुनो नाथते । आशिषीति किम् । मा-
णवकमुपनाथति । अङ्ग पुत्रकाधीष ।

10 जासिनिप्रहणनाटक्राथपिषां हिंसायाम् । ५६ ।

जासि निप्रहण नाट क्राथ पिष् इत्येतेषां धातूनां हिंसाक्रियाणां कर्मणि कारके
षष्ठी विभक्तिर्भवति । जसु हिंसायां जसु ताडन इति च चुरादौ पठ्यते । तस्येदं ग्रहणम् ।
न दैवादिकस्य जसु मोक्षण इत्यस्य । चौरस्योज्जासयति । निप्रहण इति संघातविगृहीत-
विपर्यस्तग्रहणम् । चौरस्य निप्रहन्ति । चौरस्य निहन्ति । चौरस्य प्रहन्ति । चौरस्य प्रणि-
15 हन्ति । चौरस्योन्नाटयति । वृषलस्योन्नाटयति । चौरस्य क्राथयति । वृषलस्य क्राथयति ।
निपातनाद्वृद्धिः । अयं हि घटादौ पठ्यते । श्रथ क्नथ क्रथ क्लथ हिंसार्था (Dhâtup. 19,37—
40) इति । तत्र घटादयो मित (19,1. fgg.) इति मित्संज्ञायां मितां ह्रस्व (६ । ४ । ९२) इति
ह्रस्वत्वं स्यात् । चौरस्य पिनष्टि । वृषलस्य पिनष्टि । हिंसायामिति किम् । धानाः पिन-
ष्टि । शेष इत्येव । चौरमुज्जासयति । एषामिति किम् । चौरं हिनस्ति । निप्रहण इति
20 किम् । चौरं विहन्ति ।

व्यवहृपणोः समर्थयोः । ५७ ।

व्यवहृ पण इत्येतयोः समर्थयोः समानार्थयोः कर्मणि कारके षष्ठी विभक्तिर्भवति ।
द्यूते क्रयविक्रयव्यवहारे च समानार्थत्वमनयोः । शतस्य व्यवहरति । शतस्य पणते । आ-
यप्रत्ययः कस्मान्न भवति । स्तुत्यर्थस्य पणतेरायप्रत्यय इष्यते । समर्थयोरिति किम् । श-
25 लाकां व्यवहरति । विक्षिपतीत्यर्थः । ब्राह्मणान्पणायते । स्तौतीत्यर्थः । शेष इत्येव ।
शतं पणते ।

दिवस्तदर्थस्य । ५८ ।

व्यवहृपणिसमानार्थस्य दीव्यतेः कर्मणि षष्ठी विभक्तिर्भवति । शतस्य दीव्यति ।
तदर्थस्येति किम् । ब्राह्मणं दीव्यति । योगविभाग उत्तरार्थः ।

30 विभाषोपसर्गे । ५९ ।

दिवस्तदर्थस्येति नित्यं षष्ठ्यां प्राप्तायां सोपसर्गस्य विकल्प उच्यते । उपसर्गे सति
दिवस्तदर्थस्य कर्मणि कारके विभाषा षष्ठी विभक्तिर्भवति । शतस्य प्रतिदीव्यति । शतं
प्रतिदीव्यति । उपसर्गस्येति किम् । शतस्य दीव्यति । तदर्थस्येत्येव । शलाकां प्रतिदीव्यति ।

द्वितीया ब्राह्मणे। ६०।

ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि कारके द्वितीया विभक्तिर्भवति। गामस्य तदहः सभायां दीव्येयुः। अनुपसर्गस्य षष्ठ्यां प्राप्तायामिदं वचनम्। सोपसर्गस्य तु छन्दसि व्यवस्थितविभाषयापि सिध्यति।

5 प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने। ६१।

प्रेष्य इति इष्यतेर्दैवादिकस्य लोण्मध्यमपुरुषस्यैकवचनम्। तत्साहचर्याद्ब्रुविरपि तद्विषय एव गृह्यते। प्रेष्यब्रुवोर्हविषः कर्मणः षष्ठी विभक्तिर्भवति देवतासंप्रदाने सति। अग्नये छागस्य हविषो वपाया मेदसः प्रे३ष्य। अग्नये छागस्य हविषो वपाया मेदसो ऽनु ब्रू३हि। प्रेष्यब्रुवोरिति किम्। अग्नये छागं हविर्वपां मेदो जुहुधि। हविष इति किम्।

10 अग्नये गोमयान्प्रेष्य। देवतासंप्रदान इति किम्। माणवकाय पुरोडाशं प्रेष्य। हविषः प्रस्थितस्य प्रतिषेधो वक्तव्यः। इन्द्राग्निभ्यां छागं हविर्वपां मेदः प्रस्थितं प्रे३ष्य।

चतुर्थ्यर्थे बहुलं छन्दसि। ६२।

छन्दसि विषये चतुर्थ्यर्थे षष्ठी विभक्तिर्भवति बहुलम्। पुरुषमृगश्चन्द्रमसः (VS. 24, 35)। पुरुषमृगश्चन्द्रमसे। गोधा कालका दार्वाघाटस्ते वनस्पतीनाम् (ebend.)। ते वनस्पतिभ्यः।

15 बहुलग्रहणं किम्। कृष्णो रात्र्यै (VS. 24, 36)। हिमवतो हस्ती (TS. 5, 5, 11, 1)। षष्ठ्यर्थे चतुर्थी वक्तव्या। या खर्वेण पिबति तस्यै खर्वो जायते (TS. 2, 5, 1, 7; hier ohne जायते)। या दतो धावते तस्यै श्यावदन् (ebend.)। या नखानि निकृन्तते तस्यै कुनखी (ebend.)। याङ्क्ते तस्यै काणः (ebend.)। याभ्यङ्क्ते तस्यै दुश्चर्मा (ebend.)। या प्रलिखते तस्यै खलतिः (ebend.)। अहल्यायै जार (ÇAT. BR. 3, 3, 4, 18)।

20 यजेश्च करणे। ६३।

यजेर्धातोः करणे कारके छन्दसि बहुलं षष्ठी विभक्तिर्भवति। घृतस्य यजते। घृतेन यजते। सोमस्य यजते। सोमेन यजते।

कृत्वोऽर्थप्रयोगे काले ऽधिकरणे। ६४।

छन्दसि बहुलमिति निवृत्तम्। कृत्वोऽर्थानां प्रत्ययानां प्रयोगे काले ऽधिकरणे षष्ठी

25 विभक्तिर्भवति। पञ्चकृत्वो ऽह्नो भुङ्क्ते। द्विरह्नो ऽधीते। कृत्वोऽर्थग्रहणं किम्। अह्नि शेते। रात्रौ शेते। प्रयोगग्रहणं किम्। अहनि भुक्तम्। गम्यते हि द्विस्त्रिश्चतुर्वेति। न त्वप्रयुज्यमाने भवति। कालग्रहणं किम्। द्विः कांस्यपात्र्यां भुङ्क्ते। अधिकरण इति किम्। द्विरह्ना भुङ्क्ते। शेष इत्येव। द्विरहन्यधीते।

कर्तृकर्मणोः कृति। ६५।

30 कृत्प्रयोगे कर्तरि कर्मणि च षष्ठी विभक्तिर्भवति। भवतः शायिका। भवत आसिका। कर्मणि। अपां स्रष्टा। पुरां भेत्ता। वज्रस्य भर्ता। कर्तृकर्मणोरिति किम्। शस्त्रेण भेत्ता। कृतीति किम्। तद्धितप्रयोगे मा भूत्। कृतपूर्वी कटम्। भुक्तपूर्व्योदनम्। शेष इति निवृत्तं पुनः कर्मग्रहणात्। इतरथा हि कर्तरि च कृतीति ब्रूयात्।

उभयप्राप्तौ कर्मणि। ६६।

पूर्वेण षष्ठी प्राप्ता नियम्यते। उभयप्राप्ताविति बहुव्रीहिः। उभयोः प्राप्तिर्यस्मिन्कृति सो ऽयमुभयप्राप्तिः। तत्र कर्मण्येव षष्ठी विभक्तिर्भवति न कर्तरि। आश्चर्यो गवां दोहो ऽगोपालेन। रोचते म ओदनस्य भोजनं देवदत्तेन। साधु खलु पयसः पानं यज्ञदत्तेन।
5 बहुव्रीहिविज्ञानादिह नियमो न भवति। आश्चर्यमिदं वृत्तमोदनस्य च नाम पाको ब्राह्मणानां च प्रादुर्भाव इति। अकाकारयोः स्त्रीप्रत्यययोः प्रयोगे नेति वक्तव्यम्। भेदिका देवदत्तस्य काष्ठानाम्। चिकीर्षा देवदत्तस्य कटस्य। शेषे विभाषा। अकाकारयोः स्त्रीप्रत्यययोर्ग्रहणात्तदपेक्षया शेषः स्त्रीप्रत्यय एव गृह्यते। विचित्रा हि सूत्रस्य कृतिः पाणिनेः पाणिनिना वा। केचिदविशेषेणैव विभाषामिच्छन्ति। शब्दानामनुशासनमाचार्येण आचा-
10 र्यस्येति वा।

क्तस्य च वर्तमाने। ६७।

न लोकाव्ययनिष्ठेति (६९) प्रतिषेधे प्राप्ते पुनः षष्ठी विधीयते। क्तस्य वर्तमानकालविहितस्य प्रयोगे षष्ठी विभक्तिर्भवति। राज्ञां मतः। राज्ञां बुद्धः। राज्ञां पूजितः। क्तस्येति किम्। ओदनं पचमानः। वर्तमान इति किम्। ग्रामं गतः। नपुंसके भाव उपसंख्यानम्।
15 छात्रस्य हसितम्। मयूरस्य नृत्तम्। कोकिलस्य व्याहृतम्। शेषविज्ञानात्सिद्धम् (५०)। तथा च कर्तृविवक्षायां तृतीयापि भवति। छात्रेण हसितमिति।

अधिकरणवाचिनश्च। ६८।

क्तो ऽधिकरणे चेति (३।४।७६) वक्ष्यति। तस्य प्रयोगे षष्ठी विभक्तिर्भवति। अयमपि प्रतिषेधापवादो योगः। इदमेषामासितम्। इदमेषां शयितम्। इदमहेः सृप्तम्। इदं वन-
20 कपेर्यातम्। इदमेषां भुक्तम्। इदमेषामशितम्। द्विकर्मकाणां प्रयोगे कर्तरि कृति द्वयोरपि षष्ठी द्वितीयावत्। नेताश्वस्य ग्रामस्य चैत्रः। अन्ये प्रधाने कर्मण्याहुः। तदा नेताश्वस्य ग्रामं चैत्रः।

न लोकाव्ययनिष्ठाखलर्थतृनाम्। ६९।

कर्तृकर्मणोः कृतीति (६५) षष्ठी प्राप्ता प्रतिषिध्यते। ल उ उक अव्यय निष्ठा खलर्थ
25 तृन् इत्येतेषां प्रयोगे षष्ठी विभक्तिर्न भवति। ल इति शतृशानचौ कानच्क्वसू किकिनौ च गृह्यन्ते। ओदनं पचन्। ओदनं पचमानः। ओदनं पेचानः। ओदनं पेचिवान्। पपिः सोमम्। ददिर्गाः। उ। कटं चिकीर्षुः। ओदनं बुभुक्षुः। कन्यामलंकरिष्णुः। इष्णुचो ऽपि प्रयोगे निषेधः। उक। आगामुकं वाराणसीं रक्ष आहुः। उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः। दास्याः कामुकः। अव्यय। कटं कृत्वा। ओदनं भुक्त्वा। अव्ययप्रतिषेधे तोसुन्कसुनोरप्रति-
30 षेधः। पुरा सूर्यस्योदेतोराधेयः। पुरा क्रूरस्य विसृपो विरप्शिन् (VS. 1,28)। निष्ठा। ओदनं भुक्तवान्। देवदत्तेन कृतम्। खलर्थ। ईषत्करः कटो भवता। ईषत्पानः सोमो भवता। तृन्निति प्रत्याहारग्रहणम्। लटः शतृशानचावित्यारभ्य आ तृनो नकारात् (३।२।१२४—१३५)। तेन शानन्चानश्शतृतृनामपि प्रतिषेधो भवति। सोमं पवमानः। नटमाघ्नानः।

ग्रधीयन्पारायणम् । कर्ता कटान् । वदिता जनापवादान् । द्विषः शतुर्वावचनम् । चौरं द्विषन् । चौरस्य द्विषन् ।

ग्रकेनोर्भविष्यदाधमर्ण्ययोः । ७० ।

ग्रकस्य भविष्यति काले विहितस्येनस्तु भविष्यति चाधमर्ण्ये च विहितस्य प्रयोगे 5 षष्ठी विभक्तिर्न भवति । कटं कारको व्रजति । ग्रोदनं भोजको व्रजति । इनः खल्वपि । ग्रामं गमी । ग्रामं गामी । ग्राधमर्ण्ये । शतं दायी । भविष्यदाधमर्ण्ययोरिति किम् । यवानां लावकः । सक्तूनां पायकः । ग्रवश्यं करी कटस्य । इह कस्मान्न भवति । वर्षशतस्य पूरकः । पुत्रपौत्राणां दर्शक इति । भविष्यदधिकारे विहितस्याकस्येदं ग्रहणम् ।

कृत्यानां कर्तरि वा । ७१ ।

10 कर्तृकर्मणोः कृतीति (६५) नित्यं षष्ठी प्राप्ता कर्तरि विकल्प्यते । कृत्यानां प्रयोगे कर्तरि वा षष्ठी विभक्तिर्भवति । भवता कटः कर्तव्यः । भवतः कटः कर्तव्यः । कर्तरीति किम् । गेयो माणवकः साम्नाम् । उभयप्राप्तौ कृत्ये षष्ठ्याः प्रतिषेधो वक्तव्यः । ग्राक्रष्टव्या ग्रामं शाखा देवदत्तेन । नेतव्या ग्राममजा देवदत्तेन ।

तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम् । ७२ ।

15 तुल्यार्थैः शब्दैर्योगे तृतीया विभक्तिर्भवत्यन्यतरस्याम् । पत्ते षष्ठी च । तुलोपमाशब्दौ वर्जयित्वा । शेषे विषये तृतीयाविधानात्तया मुक्ते षष्ठ्येव भवति । तुल्यो देवदत्तेन । तुल्यो देवदत्तस्य । सदृशो देवदत्तेन । सदृशो देवदत्तस्य । ग्रतुलोपमाभ्यामिति किम् । तुला देवदत्तस्य नास्ति । उपमा कृष्णस्य न विद्यते । वेति वर्तमाने ऽन्यतरस्यांग्रहणमुत्तरसूत्रे तस्य चकारेणानुकर्षणार्थम् । इतरथा हि तृतीयानुकृष्येत ।

20 चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः । ७३ ।

ग्राशिषि गम्यमानायाम् ग्रायुष्य मद्र भद्र कुशल सुख ग्रर्थ हित इत्येतैर्योगे चतुर्थी विभक्तिर्भवति । चकारो विकल्पानुकर्षणार्थः । शेषे चतुर्थीविधानात्तया मुक्ते षष्ठी विभक्तिर्भवति । ग्रत्रायुष्यादीनां पर्यायग्रहणं कर्तव्यम् । ग्रायुष्यं देवदत्ताय भूयात् । ग्रायुष्यं देवदत्तस्य भूयात् । चिरं जीवितं देवदत्ताय देवदत्तस्य वा भूयात् । मद्रं देवदत्ताय भूयात् । मद्रं देवदत्तस्य । 25 भद्रं देवदत्ताय । भद्रं देवदत्तस्य । कुशलं देवदत्ताय । कुशलं देवदत्तस्य । निरामयं देवदत्ताय । निरामयं देवदत्तस्य । सुखं देवदत्ताय । सुखं देवदत्तस्य । शं देवदत्ताय । शं देवदत्तस्य । ग्रर्थो देवदत्ताय । ग्रर्थो देवदत्तस्य । प्रयोजनं देवदत्ताय । प्रयोजनं देवदत्तस्य । हितं देवदत्ताय । हितं देवदत्तस्य । पथ्यं देवदत्ताय । पथ्यं देवदत्तस्य । ग्राशिषीति किम् । ग्रायुष्यं देवदत्तस्य तपः ।

---

### 2. Ueber den Gebrauch der Praeterita.

छन्दसि लिट् (sc. भूते) । पा॰ ३ । २ । १०५ । Im Veda steht das Perfectum (im 30 Sinne der Vergangenheit). Kâçikâ: भूत इत्येव । छन्दसि विषये धातोर्लिट्प्रत्ययो भवति । ग्रहं सूर्यमुभयतो ददर्श (VS. 8,9) । ग्रहं द्यावा पृथिवी ग्रा ततान ।

लिटः कानज्वा । १०६ । An die Stelle des Perfectum kann auch das Participium auf आन treten. Kâçikâ: छन्दसि लिटः कानजादेशो भवति वा । अग्निं चिक्यानः । सोमं सुषुवाणाः । वरुणं सुषुवाणः । न च भवति । अहं सूर्यमुभयतो ददर्श । अहं द्यावा पृथिवी आ ततान ।

क्वसुश्च । १०७ । Auch das Participium auf वंस्. Kâçikâ: छन्दसि लिटः क्वसुरादेशो भवति । जज्ञिवान् । पपिवान् । न च भवति । अहं सूर्यमुभयतो ददर्श । योगविभाग उत्तरार्थः । (Sûtra 106 und 107 mussten getrennt werden, weil im folgenden Sûtra nur क्वसु zu ergänzen ist.)

भाषायां सदवसश्रुवः । १०८ । In der profanen Sprache kann bei सद्, वस् und श्रु das Participium auf वंस् an die Stelle des Perfectum treten. Kâçikâ: सद वस श्रु इत्येतेभ्यः परस्य लिटो भाषायां विषये वा क्वसुरादेशो भवति । आदेशविधानादेव लिडपि तद्विषयो ऽनुमीयते । उपसेदिवान्कौत्सः पाणिनिम् । तेन मुक्ते यथाप्राप्तं प्रत्यया भवन्ति । उपासदत् । उपासीदत् । उपससाद । अनूषिवान्कौत्सः पाणिनिम् । अन्ववात्सीत् । अन्ववसत् । अनूवास । उपशुश्रुवान्कौत्सः पाणिनिम् । उपाश्रौषीत् । उपाशृणोत् । उपशुश्राव । लुङ्लिङ्विषये परस्तादनुवृत्तेः क्वसुर्भवति ।

उपेयिवाननाश्वाननूचानश्च । १०९ । (Diese drei Participia werden ihrer unregelmässigen Bildung wegen besonders aufgeführt.)

लुङ् । ११० । (Allgemeine Regel) Der Aorist steht (wenn etwas Vergangenes gemeint ist). Mahâbh.: वसेर्लुङ् रात्रिशेषे (ein Vârttika) । वसेर्लुङ् रात्रिशेष इति वक्तव्यम् । न्याय्ये प्रत्युत्थाने प्रत्युत्थितं कश्चित्कं चित्पृच्छति । क्व भवानुषित इति । स आह । अमुत्रावात्समिति । अमुत्रावसमिति प्राप्नोति (dieses hätte man nach dem folgenden Sûtra erwartet, weil nicht vom selben Tage die Rede geht) । जागरणसंततौ (ein Vârttika) । जागरणसंतताविति च वक्तव्यम् । यो हि मुहूर्तमात्रमपि स्वपिति तत्रावसमिति प्राप्नोति (nach dem folgenden Sûtra) ।

अनद्यतने लङ् । १११ । (Erste Ausnahme.) Das Imperfectum steht, wenn Etwas nicht am selben Tage geschehen ist. Mahâbh.: अनद्यतन इति बहुव्रीहिनिर्देशः । अद्य ह्यो ऽभुक्ष्महि (ein Vârttika) । अनद्यतन इति बहुव्रीहिनिर्देशः कर्तव्यः । अविद्यमानाद्यतनो ऽनद्यतन इति । किं प्रयोजनम् । अद्य ह्यो वाभुक्ष्महीति । अद्य च ह्यश्चाभुक्ष्महीति व्यामिश्रे न लुङेव यथा स्यात् । परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये (ein Vârttika) । परोक्षे च लोकविज्ञाते प्रयोक्तुर्दर्शनविषये लङ् वक्तव्यः । अरुणद्यवनः साकेतम् । अरुणद्यवनो माध्यमिकान् (bei dieser allgemein bekannten Begebenheit ist der Sprechende zwar nicht dabei gewesen, hätte es aber sein können. Nach Sûtra 115 hätte man das Perfectum erwartet) । परोक्ष इति किमर्थम् । उदगादादित्यः (der Sprechende hat

**dieses selbst gesehen)** । लोकविज्ञात इति किमर्थम् । चकार कटं देवदत्तः **(der Sprechende hätte dieses wohl selbst sehen können, hat es aber nicht gesehen, eben so wenig ist die Sache allgemein bekannt)** । प्रयोक्तुर्दर्शनविषय इति किमर्थम् । जघान कंसं किल वासुदेवः । **(die Sache ist wohl allgemein bekannt, aber der Sprechende hat es**
5 **nicht gesehen und auch nicht sehen können.)**

अभिज्ञावचने लृट् । ११२ । **(Ausnahme zu 111.) Steht ein Wort in der Bedeutung von «gedenken, sich erinnern» dabei, dann wird das Futurum auf** स्य **gesetzt. Kâçikâ:** अभिज्ञा स्मृतिः । तद्वचन उपपदे भूतानद्यतने लृट्प्रत्ययो भवति । लङो ऽपवादः । अभिजानासि देवदत्त कश्मीरेषु वत्स्यामः । वचनग्रहणं पर्यायार्थम् । अभिजानासि स्मरसि
10 बुध्यसे चेतयस इति ।

न यदि । ११३ । **Wenn** यद् **dabei steht, wird nicht das Futurum auf** स्य **gesetzt (sondern das Imperfectum nach 111). Kâçikâ:** यच्छब्दसहिते ऽभिज्ञावचन उपपदे लृट्प्रत्ययो न भवति । पूर्वेण **(sc.** सूत्रेण**)** प्राप्तः प्रतिषिध्यते । अभिजानासि देवदत्त यत्कश्मीरेष्ववसाम । वासमात्रं स्मर्यते । न त्वपरं किं चिल्लक्ष्यते । तेनोत्तरसूत्रस्य नायं विषयः ।

15 विभाषा साकाङ्क्षे । ११४ । **Nach Belieben (Futurum oder Imperfectum), wenn der Satz noch eine Ergänzung hat. Mahâbh.:** किमुदाहरणम् । अभिजानासि देवदत्त कश्मीरेषु वत्स्यामस्तत्र सक्तून्पास्यामः । अभिजानासि देवदत्त कश्मीरेष्ववसाम तत्र सक्तूनपिबाम । भवेत् । पूर्वं परमाकाङ्क्षतीति साकाङ्क्षं स्यात् । परं तु कथं साकाङ्क्षम् । परमपि साकाङ्क्षम् । कथम् । अस्त्यस्मिन्नाकाङ्क्षेत्यतः साकाङ्क्षम् । विभाषा साकाङ्क्षे सर्वत्र **(ein**
20 **Vârttika)** । विभाषा साकाङ्क्षे सर्वत्रेति वक्तव्यम् । क्व सर्वत्र । यदि चायदि च **(vgl. 113)** । यदि तावत् । अभिजानासि देवदत्त यत्कश्मीरान्गमिष्यामः । यत्कश्मीरानगच्छाम । यत्तत्रौदनं भोक्ष्यामहे । यत्तत्रौदनमभुञ्ज्महि । अयदि । अभिजानासि देवदत्त कश्मीरान्गमिष्यामः । कश्मीरानगच्छाम । तत्रौदनं भोक्ष्यामहे । तत्रौदनमभुञ्ज्महि ।

परोक्षे लिट् । ११५ । **(Zweite Ausnahme zu 111.) Das Perfectum steht, wenn man**
25 **Etwas nicht mit eigenen Augen gesehen hat. Mahâbh.:** कथंजातीयकं पुनः परोक्षं नाम । के चित्तावदाहुः । वर्षशतवृत्तं परोक्षमिति । अपर आहुः । वर्षसहस्रवृत्तं परोक्षमिति । अपर आहुः । कुड्यकटान्तरितं परोक्षमिति । अपर आहुः । द्व्यहवृत्तं त्र्यहवृत्तं वेति । सर्वथोत्तमो न सिध्यति **(weil die erste Person, wenn sie Etwas von sich aussagt, stets dabei gewesen ist)** । सुप्तमत्तयोरुत्तमः **(ein Vârttika)** । सुप्तमत्तयोरुत्तम इति वक्तव्यम् । सुप्तो
30 ऽहं किल विललाप । मत्तो ऽहं किल विललाप । सुप्तो न्वहं किल विललाप । मत्तो न्वहं किल विललाप । अथ भवति वै । कश्चिज्जाग्रदपि वर्तमानकालं नोपलभते । तद्यथा । वैयाकरणानां शाकटायनो राजमार्ग आसीनः शकटसार्थं यान्तं नोपलेभे । किं पुनः कारणं कश्चिज्जाग्रदपि वर्तमानं कालं नोपलभते । मनसा प्रयुक्तानीन्द्रियाण्युपलब्धौ कार-

ज्ञानि भवति। मनसो ऽसंनिध्यात्। परोक्षे लिडत्यन्तापह्नवे च (ein Vârttika)। परोक्षे लिडित्यत्रात्यन्तापह्नवे चेति वक्तव्यम्। Beispiele aus der Kâçikâ: कलिङ्गेषु स्थितो ऽसि। नाहं कलिङ्गाञ्जगाम (ich bin nie nach Kaliñga gekommen)। दक्षिणापथं प्रविष्टो ऽसि। नाहं दक्षिणापथं प्रविवेश।

5 हशश्वतोर्लङ् च। ११६। Wenn ह und शश्वत् dabei stehen, kann auch das Imperfectum gesetzt werden. Beispiele aus dem Mahâbh.: इति हाकरोत्। इति ह चकार। शश्वदकरोत्। शश्वच्चकार।

प्रश्ने चासन्नकाले। ११७। Dieselben zwei Tempora können auch in der Frage gesetzt werden, wenn es sich um eine eben vergangene Zeit handelt. Kâçikâ: क-10 श्चित्कं चित्पृच्छति। अगच्छद्देवदत्तः। जगाम देवदत्तः। अयजद्देवदत्तः। इयाज देवदत्तः। प्रश्न इति किम्। जगाम देवदत्तः। आसन्नकाल इति किम्। भवन्तं पृच्छामि। जघान कंसं किल वासुदेवः।

लट् स्मे। ११८। In Verbindung mit स्म wird das Präsens gesetzt. Beispiel aus dem Mahâbh.: धर्मेण स्म कुरवो युध्यन्ते।

15 अपरोक्षे च। ११९। Auch dann, wenn man selbst dabei gewesen ist. Kâçikâ: अ-परोक्षे च भूतानद्यतने ऽर्थे वर्तमानाद्धातोः स्म उपपदे लट्प्रत्ययो भवति। एवं स्म पिता ब्रवीति। इति स्मोपाध्यायः कथयति।

ननौ पृष्टप्रतिवचने। १२०। Bei ननु steht (trotz der Vergangenheit) das Präsens, wenn auf eine Frage geantwortet wird. Kâçikâ: अनद्यतने (111) परोक्ष (115) इति 20 निवृत्तम्। भूतसामान्ये विधिरयम्। ननुशब्द उपपदे प्रश्नपूर्वके प्रतिवचने भूते ऽर्थे लट्प्र-त्ययो भवति। लुङो (110) ऽपवादः। अकार्षीः कटं देवदत्त। ननु करोमि भोः। अवोचस्तत्र किं चिद्देवदत्त। ननु ब्रवीमि भोः। पृष्टप्रतिवचन इति किम्। नन्वकार्षीन्माणवकः।

नन्वोर्विभाषा। १२१। Bei न und नु nach Belieben (Präsens oder Aorist). Kâçikâ: भूत इत्येव। नशब्दे नुशब्दे चोपपदे पृष्टप्रतिवचने विभाषा लट्प्रत्ययो भवति भूते। अका-25 र्षीः कटं देवदत्त। न करोमि भोः। नाकार्षम्। अहं नु करोमि। अहं न्वकार्षम्।

पुरि लुङ् चास्मे। १२२। Bei पुरा ohne स्म kann auch der Aorist gesetzt werden. Kâçikâ: अनद्यतनग्रहणमिह मण्डूकप्लुत्यानुवर्तते (aus 111)। पुराशब्द उपपदे स्मशब्द-वर्जिते भूतानद्यतने ऽर्थे विभाषा लुङ्प्रत्ययो भवति लट् च। ताभ्यां मुक्ते पक्षे यथाविषयमन्यो ऽपि प्रत्ययो भवति। वसन्तीह पुरा छात्राः। अवात्सुरिह पुरा छात्राः। अवसन्निह पुरा 30 छात्राः। ऊषुरिह पुरा छात्राः। अस्म इति किम्। नलेन स्म पुराधीयते। Das Mahâbh. führt nur für das Präsens und den Aorist Beispiele an: रथेनायं पुरा याति। रथेनायं पुरायासीत्। Ebendaselbst wird für die Allmacht des स्म, das auch über ह und

शश्वत् (116) den Sieg davonträgt, folgendes Beispiel gegeben: न ह स्म वै पुरा शश्वदग्निरपरशुवृक्णं दहति (TS. 5,1,10,4) ।

आशंसायां भूतवच्च । ३ । ३ । १३२ । Bei einem Wunsche (also bei etwas Zukünftigem) auch so, als wenn es vergangen wäre (d. h. ausser dem Futurum auf स्य können auch
5 der Aorist und das Präsens stehen, indem aus dem vorhergehenden Sûtra वर्तमानवत् zu ergänzen ist). Mahâbh.: आशंसा नाम भविष्यत्काला । आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधः (ein Vârttika) । आशंसायां भूतवदतिदेशे लङ्लिटोः प्रतिषेधो वक्तव्यः । न वापवादस्य निमित्ताभावात् । अनद्यतने हि तयोर्विधानम् (vgl. 3,1,111. 115) । न वा वक्तव्यः (sc. लङ्लिटोः प्रतिषेधः) । किं कारणम् । अपवादस्य निमित्ताभावात् ।
10 नात्रापवादस्य निमित्तमस्ति । कथम् । अनद्यतने हि तयोर्विधानम् । अनद्यतने हि तौ विधीयेते लङ्लिटौ । न चात्रानद्यतनः कालो विवक्षितः । कस्तर्हि । भूतकालसामान्यम् । In den folgenden Beispielen aus der Kâçikâ wird auch das als Verbum finitum fungirende Participium praet. für erlaubt gehalten: उपाध्यायश्चेदागमत् (oder आगतः, आगच्छति, आगमिष्यति) एते व्याकरणमध्यगीष्महि (oder अधीतवन्तः, अधीमहे, अध्ये-
15 ष्यामहे) । Sollte der Lehrer (wie wir wünschen) kommen, so würden wir, die wir hier versammelt sind, Grammatik studiren.

क्षिप्रवचने लृट् । १३३ । Steht ein Wort in der Bedeutung von «schnell» dabei, so wird das Futurum auf स्य angewandt. Beispiel aus dem Mahâbh.: उपाध्यायश्चेदागतः क्षिप्रमध्येष्यामहे ।

20 आशंसावचने लिङ् । १३४ । Steht ein Wort in der Bedeutung von «hoffen» dabei, so wird der Potentialis gebraucht. Beispiel aus dem Mahâbh.: उपाध्यायश्चेदागत आशंसे युक्तोऽधीयीय । Eben so, wenn क्षिप्रम् hinzugefügt wird. Zu 132 gehört das im Mahâbh. unter 134 mitgetheilte Vârttika, welches mit der Erklärung und mit einer Zurückweisung folgendermaassen lautet: अनिष्पन्ने निष्पन्नशब्दः शिष्योऽनिष्प-
25 न्नत्वात् । अनिष्पन्ने निष्पन्नशब्दः शिष्यः शासितव्यः । किं कारणम् । अनिष्पन्नत्वात् । देवाश्चेदृष्टो निष्पन्नाः शालयः (wenn es geregnet hätte, wäre der Reis reif geworden) । तत्र भवितव्यम् । संपत्स्यन्ते शालय इति ॥ सिद्धं तु भविष्यत्प्रतिषेधात् । सिद्धमेतत् । कथम् । भविष्यत्प्रतिषेधात् । यल्लोको भविष्यद्वाचिनः शब्दस्य प्रयोगं न मृष्यति । कश्चिदाह । देवश्चेदृष्टः संपत्स्यन्ते शालय इति । स उच्यते । मैवं वोचः । संपन्नाः शालय इत्येवं ब्रूहि ।

30 नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः । १३५ । Bei einer ununterbrochenen Fortdauer einer Handlung, so wie bei einem nahen Zeitpunkte, werden nicht die für den nicht-heutigen Tag geltenden Tempora (Imperfectum und Futurum auf तृ) gesetzt. Kâçikâ: भूतानद्यतने भविष्यदनद्यतने च लङ्लुटौ विहितौ । तयोरयं प्रतिषेधः । अनद्य-

तनवत्प्रत्ययविधिर्न भवति क्रियाप्रबन्धे सामीप्ये च गम्यमाने । क्रियाणां प्रबन्धः सातत्येनानुष्ठानम् । कालानां सामीप्यं तुल्यजातीयेनाव्यवधानम् । यावज्जीवं भृशमन्नमदात् । भृशमन्नं दास्यति । यावज्जीवं पुत्रो ऽध्यापिपत् । यावज्जीवमध्यापयिष्यति । सामीप्ये खल्वपि । येयं पौर्णमास्यतिक्रान्ता एतस्यामुपाध्यायो ऽग्नीनाधित । सोमेनायष्ट । गामदित ।
5 येयममावास्यागामिनी एतस्यामुपाध्यायो ऽग्नीनाधास्यते । सोमेन यक्ष्यते । गां दास्यते । द्वौ प्रतिषेधौ (das न und das negirende अनद्यतनवत् im Sûtra) यथाप्राप्तस्याभ्यनुज्ञापनाय ।

माङि लुङ् । १७५ । Bei der prohibitiven Partikel मा wird der Aorist gesetzt.

स्मोत्तरे लङ् च । १७६ । Folgt auf मा noch स्म, so kann auch das Imperfectum gesetzt werden.

10 न माङ्योगे । ६ । ४ । ७४ । (Das Augment) wird nicht angefügt in der Verbindung mit der prohibitiven Partikel मा.

---

## XIX. Amarakoça.

### 1. Anzug und darauf Bezügliches (2, 6, 3, 1—41).

आकल्पवेषौ नेपथ्यं प्रतिकर्म प्रसाधनम् ।
दशैते त्रिष्वलंकर्तालंकरिष्णुश्च मण्डितः ॥ १ ॥
प्रसाधितो ऽलंकृतश्च भूषितश्च परिष्कृतः ।
15 विभ्राड् भ्राजिष्णुरोचिष्णू भूषा तु स्यादलंक्रिया ॥ २ ॥
अलंकारस्त्वाभरणं परिष्कारो विभूषणम् ।
मण्डनं चाथ मुकुटं किरीटं पुंनपुंसकम् ॥ ३ ॥
चूडामणिः शिरोरत्नं तरलो हारमध्यगः ।
वालपाश्या पारितथ्या पत्रपाश्या ललाटिका ॥ ४ ॥
20 कर्णिका तालपत्त्रं स्यात्कुण्डलं कर्णवेष्टनम् ।
ग्रैवेयकं कण्ठभूषा लम्बनं स्याल्ललन्तिका ॥ ५ ॥
स्वर्णैः प्रालम्बिकाथोरःसूत्रिका मौक्तिकैः कृता ।
हारो मुक्तावली देवच्छन्दो ऽसौ शतयष्टिकः ॥ ६ ॥
हारभेदा यष्टिभेदा गुत्सगुत्सार्धगोस्तनाः ।
25 अर्धहारो माणवक एकावल्येकयष्टिका ॥ ७ ॥
सैव नक्षत्रमाला स्यात्सप्तविंशतिमौक्तिकैः ।
आवापकः पारिहार्यः कटको वलयो ऽस्त्रियाम् ॥ ८ ॥

केयूरमङ्गदं तुल्ये अङ्गुलीयकमूर्मिका ।
साक्षराङ्गुलिमुद्रा सा कङ्कणं करभूषणम् ॥ ९ ॥
स्त्रीकट्यां मेखला काञ्ची सप्तकी रसना तथा ।
क्लीबे सारसनं चाथ पुंस्कट्यां शृङ्खलं त्रिषु ॥ १० ॥
5 पादाङ्गदं तुलाकोटिर्मञ्जीरो नूपुरोऽस्त्रियाम् ।
हंसकः पादकटकः किङ्किणी क्षुद्रघण्टिका ॥ ११ ॥
त्वक्फलकृमिरोमाणि वस्त्रयोनिर्दश त्रिषु ।
वाल्कं क्षौमादि फालं तु कार्पासं बादरं च तत् ॥ १२ ॥
कौशेयं कृमिकोशोत्थं राङ्कवं मृगरोमजम् ।
10 अनाहतं निष्प्रवाणि तन्त्रकं च नवाम्बरे ॥ १३ ॥
तत्स्यादुद्गमनीयं यद्धौतयोर्वस्त्रयोर्युगम् ।
पत्त्रोर्णं धौतकौशेयं बहुमूल्यं महाधनम् ॥ १४ ॥
क्षौमं दुकूलं स्याद्द्वे तु निवीतं प्रावृतं त्रिषु ।
स्त्रियां बहुत्वे वस्त्रस्य दशाः स्युर्वस्तयो द्वयोः ॥ १५ ॥
15 दैर्घ्यमायाम आरोहः परिणाहो विशालता ।
पटच्चरं जीर्णवस्त्रं समौ नक्तककर्पटौ ॥ १६ ॥
वस्त्रमाच्छादनं वासश्चैलं वसनमंशुकम् ।
सुचेलकः पटोऽस्त्री स्याद्वराशिः स्थूलशाटकः ॥ १७ ॥
निचोलः प्रच्छदपटः समौ रल्लककम्बलौ ।
20 अन्तरीयोपसंव्यानपरिधानान्यधोंऽशुके ॥ १८ ॥
द्वौ प्रावारोत्तरासङ्गौ समौ बृहतिका तथा ।
संव्यानमुत्तरीयं च चोलः कूर्पासकः स्त्रियाः ॥ १९ ॥
नीशारः स्यात्प्रावरणे हिमानिलनिवारणे ।
अर्धोरुकं वरस्त्रीणां स्याच्चण्डातकमंशुकम् ॥ २० ॥
25 स्यात्त्रिष्वाप्रपदीनं तत्प्राप्नोत्याप्रपदं हि यत् ।
अस्त्री वितानमुल्लोचो दूष्याद्यं वस्त्रवेश्मनि ॥ २१ ॥
प्रतिसीरा जवनिका स्यात्तिरस्करणी च सा ।
परिकर्माङ्गसंस्कारः स्यान्मार्ष्टिर्मार्जना मृजा ॥ २२ ॥
उद्वर्तनोत्सादने द्वे समे आप्लाव आप्लवः ।
30 स्नानं चर्चा तु चार्चिक्यं स्थासको ऽथ प्रबोधनम् ॥ २३ ॥
अनुबोधः पत्त्रलेखा पत्त्राङ्गुलिरिमे समे ।
तमालपत्त्रतिलकचित्रकाणि विशेषकम् ॥ २४ ॥

द्वितीयं च तुरीयं च न स्त्रियामथ कुङ्कुमम् ।
काश्मीरजन्माग्निशिखं वरं बाल्हीकपीतने ॥ २५ ॥
रक्तसंकोचपिशुनं धीरलोहितचन्दनम् ।
लाक्षा राक्षा जतु क्लीबे यावो ऽलक्तो द्रुमामयः ॥ २६ ॥
5 लवङ्गं देवकुसुमं श्रीसंज्ञमथ जायकम् ।
कालीयकं च कालानुसार्यं चाथ समार्थकम् ॥ २७ ॥
वंशिकागुरुराजार्हलोहकृमिजजोङ्गकम् ।
कालागुर्वगुरुः स्यात्तन्मङ्गल्या मल्लिगन्धि यत् ॥ २८ ॥
यक्षधूपः सर्जरसो रालसर्वरसावपि ।
10 बहुरूपो ऽप्यथ वृकधूपकृत्रिमधूपकौ ॥ २९ ॥
तुरुष्कः पिण्डकः सिल्हो यावनो ऽप्यथ पायसः ।
श्रीवासो वृकधूपो ऽपि श्रीवेष्टसरलद्रवौ ॥ ३० ॥
मृगनाभिर्मृगमदः कस्तूरी चाथ कोलकम् ।
कक्कोलकं कोशफलमथ कर्पूरमस्त्रियाम् ॥ ३१ ॥
15 घनसारश्चन्द्रसंज्ञः सिताभ्रो हिमवालुका ।
गन्धसारो मलयजो भद्रश्रीश्चन्दनो ऽस्त्रियाम् ॥ ३२ ॥
तैलपर्णिकगोशीर्षे हरिचन्दनमस्त्रियाम् ।
तिलपर्णी तु पत्राङ्गं रञ्जनं रक्तचन्दनम् ॥ ३३ ॥
कुचन्दनं चाथ जातीकोशजातीफले समे ।
20 कर्पूरागुरुकस्तूरीकक्कोलैर्यक्षकर्दमः ॥ ३४ ॥
गात्रानुलेपनी वर्तिर्वर्णकं स्याद्विलेपनम् ।
चूर्णानि वासयोगाः स्युर्भावितं वासितं त्रिषु ॥ ३५ ॥
संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनम् ।
माल्यं मालास्रजौ मूर्ध्नि केशमध्ये तु गर्भकः ॥ ३६ ॥
25 प्रभ्रष्टकं शिखालम्बि पुरो न्यस्तं ललामकम् ।
प्रालम्बमृजुलम्बि स्यात्कण्ठाद्वैकक्षकं तु तत् ॥ ३७ ॥
यत्तिर्यक्क्षिप्तमुरसि शिखास्वापीडशेखरौ ।
रचना स्यात्परिस्पन्द आभोगः परिपूर्णता ॥ ३८ ॥
उपधानं तूपबर्हः शय्यायां शयनीयवत् ।
30 शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः ॥ ३९ ॥
गेण्डुकः कन्दुको दीपः प्रदीपः पीठमासनम् ।
समुद्गकः संपुटकः प्रतिग्राहः पतद्ग्रहः ॥ ४० ॥

प्रसाधनी कङ्कतिका पिष्टातः पटवासकः ।
दर्पणे मुकुरादर्शौ व्यजनं तालवृन्तकम् ॥ ४१ ।

---

**2. Auf ण auslautende Wörter mit ihren Bedeutungen (3, 4, 12, 48—59).**

भ्रूणो ऽर्भके स्त्रैणगर्भे बाणो बलिसुते शरे ।
कणो ऽतिसूक्ष्मे धान्यांशे संघाते प्रमथे गणः ॥ ४८ ॥
5 पणो द्यूतादिषूत्सृष्टे भृतौ मूल्ये धने ऽपि च ।
मौर्व्यां द्रव्याश्रिते सत्त्वशुक्लसंध्यादिके गुणः ॥ ४९ ॥
निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः ।
वर्णो द्विजादौ शुक्लादौ स्तुतौ वर्णं तु वाक्षरे ॥ ५० ॥
अरुणो भास्करे ऽपि स्याद्वर्णभेदे ऽपि च त्रिषु ।
10 स्थाणुः शर्वे ऽप्यथ द्रोणः काके ऽपि च रवे रणः ॥ ५१ ॥
ग्रामणीर्नापिते पुंसि श्रेष्ठे ग्रामाधिपे त्रिषु ।
ऊर्णा मेषादिलोम्नि स्यादावर्ते चान्तरा भ्रुवौ ॥ ५२ ॥
हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या ।
त्रिषु पाण्डौ च हरिणः स्थूणा स्तम्भे ऽपि वेश्मनः ॥ ५३ ॥
15 तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे ।
वणिक्पथे ऽपि विपणिः सुरा प्रत्यक्च वारुणी ॥ ५४ ॥
करेणुरिभ्यां स्त्री नेभे द्रविणं तु बलं धनम् ।
शरणं गृहरक्षित्रोः श्रीपर्णं कमले ऽपि च ॥ ५५ ॥
विषाभिमरलोहेषु तीक्ष्णं क्लीबे खरे त्रिषु ।
20 प्रमाणं हेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ॥ ५६ ॥
करणं साधकतमं क्षेत्रगात्रेन्द्रियेष्वपि ।
प्राण्युत्पादे संसरणमसंबाधचमूगतौ ॥ ५७ ॥
घण्टापथे ऽथ वान्तान्ने समुद्धरणमुन्नये ।
अतस्त्रिषु विषाणं स्यात्पशुशृङ्गेभदन्तयोः ॥ ५८ ॥
25 प्रवणः क्रमनिम्नोर्व्यां प्रह्वे ना तु चतुष्पथे ।
संकीर्णो निचिताशुद्धावीरिणं शून्यमूषरम् ॥ ५९ ॥

---

## XX. Kâvjâdarça.

### Upamâ und Rûpaka (2, 14—96).

यथा कथं चित्सादृश्यं यत्रोद्भूतं प्रतीयते ।
उपमा नाम सा तस्याः प्रपञ्चो ऽयं निदर्श्यते ॥ १४ ॥
अम्भोरुहमिवाताम्रं मुग्धे करतलं तव ।
इति धर्मोपमा साक्षात्तुल्यधर्मप्रदर्शनात् ॥ १५ ॥
5 राजीवमिव ते वक्त्रं नेत्रे नीलोत्पले इव ।
इयं प्रतीयमानैकधर्मा वस्तूपमैव सा ॥ १६ ॥
तवाननमिवोन्निद्रमरविन्दमभूदिति ।
सा प्रसिद्धिविपर्यासाद्विपर्यासोपमेष्यते ॥ १७ ॥
तवाननमिवाम्भोजमम्भोजमिव ते मुखम् ।
10 इत्यन्योऽन्योपमा सेयमन्योऽन्योत्कर्षशंसिनी ॥ १८ ॥
त्वन्मुखं कमलेनैव तुल्यं नान्येन केन चित् ।
इत्यन्यसाम्यव्यावृत्तेरियं सा नियमोपमा ॥ १९ ॥
पद्मं तावत्तवान्वेति मुखमन्यच्च तादृशम् ।
अस्ति चेदस्तु तत्कारीत्यसावनियमोपमा ॥ २० ॥
15 समुच्चयोपमाप्यस्ति न कान्त्यैव मुखं तव ।
ह्लादनाख्येन चात्येति कर्मणेन्दुमितीदृशी ॥ २१ ॥
त्वय्येव त्वन्मुखं दृष्टं दृश्यते दिवि चन्द्रमाः ।
इयत्येव भिदा नान्येत्यसावतिशयोपमा ॥ २२ ॥
मय्येवास्या मुखश्रीरित्यलमिन्दोर्विकत्थनैः ।
20 पद्मे ऽपि सा यदस्त्येवेत्यसावुत्प्रेक्षितोपमा ॥ २३ ॥
यदि किं चिद्भवेत्पद्मं सुभ्रु विभ्रान्तलोचनम् ।
तत्ते मुखश्रियं धत्तामित्यसावद्भुतोपमा ॥ २४ ॥
शशीत्युत्प्रेक्ष्य तन्वङ्गि त्वन्मुखं त्वन्मुखाशया ।
इन्दुमप्यनुधावामीत्येषा मोहोपमा स्मृता ॥ २५ ॥
25 किं पद्ममन्तर्भ्रान्तालि किं ते लोलेक्षणं मुखम् ।
मम दोलायते चित्तमितीयं संशयोपमा ॥ २६ ॥
न पद्मस्येन्दुनिग्राह्यस्येन्दुलज्जाकरी द्युतिः ।
अतस्त्वन्मुखमेवेदमित्यसौ निर्णयोपमा ॥ २७ ॥
शिशिरांशुप्रतिस्पर्धि श्रीमत्सुरभिगन्धि च ।
30 अम्भोजमिव ते वक्त्रमिति श्लेषोपमा स्मृता ॥ २८ ॥

सद्रूपशब्दवाच्यत्वात्सा समानोपमा यथा ।
बालेवोद्यानमालेयं सालकाननशोभिनी ॥ २९ ॥
पद्मं बहुरजश्चन्द्रः क्षयी ताभ्यां तवाननम् ।
समानमपि सोत्सेकमिति निन्दोपमा स्मृता ॥ ३० ॥
5 ब्रह्मणो ऽप्युद्भवः पद्मं चन्द्रः शंभुशिरोधृतः ।
तौ तुल्यौ त्वन्मुखेनेति सा प्रशंसोपमोच्यते ॥ ३१ ॥
चन्द्रेण त्वन्मुखं तुल्यमित्याचिख्यासु मे मनः ।
स गुणो वास्तु दोषो वेत्याचिख्यासोपमां विदुः ॥ ३२ ॥
शतपत्रं शरच्चन्द्रस्त्वदाननमिति त्रयम् ।
10 परस्परविरोधीति सा विरोधोपमा मता ॥ ३३ ॥
न जातु शक्तिरिन्दोस्ते मुखेन प्रतिगर्जितुम् ।
कलङ्किनो जडस्येति प्रतिषेधोपमैव सा ॥ ३४ ॥
मृगेक्षणाङ्कं ते वक्त्रं मृगेणैवाङ्कितः शशी ।
तथापि सम एवासौ नोत्कर्षीति चटूपमा ॥ ३५ ॥
15 न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे ।
इति विस्पष्टसादृश्यात्तत्त्वाख्यानोपमैव सा ॥ ३६ ॥
चन्द्रारविन्दयोः कान्तिमतिक्रम्य मुखं तव ।
आत्मनैवाभवत्तुल्यमित्यसाधारणोपमा ॥ ३७ ॥
सर्वपद्मप्रभासारः समाहृत इव क्व चित् ।
20 त्वदाननं विभातीति तामभूतोपमां विदुः ॥ ३८ ॥
चन्द्रबिम्बादिव विषं चन्दनादिव पावकः ।
परुषा वागितो वक्त्रादित्यसंभावितोपमा ॥ ३९ ॥
चन्दनोदकचन्द्रांशुचन्द्रकान्तादिशीतलः ।
स्पर्शस्तवेत्यतिशयं बोधयन्ती बहूपमा ॥ ४० ॥
25 चन्द्रबिम्बादिवोत्कीर्णं पद्मगर्भादिवोद्धृतम् ।
तव तन्वङ्गि वदनमित्यसौ विक्रियोपमा ॥ ४१ ॥
पूष्ण्यातप इवाह्नीव पूषा व्योम्नीव वासरः ।
विक्रमस्त्वय्यधाल्लक्ष्मीमिति मालोपमा मता ॥ ४२ ॥
वाक्यार्थेनैव वाक्यार्थः को ऽपि यद्युपमीयते ।
30 एकानेकेवशब्दत्वात्सा वाक्यार्थोपमा द्विधा ॥ ४३ ॥
त्वदाननमधीराक्षमाविर्दशनदीधिति ।
भ्रमद्भृङ्गमिवालक्ष्यकेसरं भाति पङ्कजम् ॥ ४४ ॥

नलिन्या इव तन्वङ्ग्यास्तस्याः पद्ममिवाननम् ।
मया मधुव्रतेनेव पायं पायमरम्यत ॥ ४५ ॥
वस्तु किं चिदुपन्यस्य न्यसनात्तत्सधर्मणः ।
साम्यप्रतीतिरस्तीति प्रतिवस्तूपमा यथा ॥ ४६ ॥
5 नैको ऽपि त्वादृशो ऽद्यापि जायमानेषु राजसु ।
ननु द्वितीयो नास्त्येव पारिजातस्य पादपः ॥ ४७ ॥
अधिकेन समीकृत्य हीनमेकक्रियाविधौ ।
यद्ब्रुवन्ति स्मृता सेयं तुल्ययोगोपमा यथा ॥ ४८ ॥
दिवो जागर्ति रक्षायै पुलोमारिर्भुवो भवान् ।
10 असुरास्तेन हन्यन्ते सावलेपास्त्वया नृपाः ॥ ४९ ॥
कान्त्या चन्द्रमसं धाम्ना सूर्यं धैर्येण चार्णवम् ।
राजन्ननुकरोषीति सैषा हेतूपमा मता ॥ ५० ॥
न लिङ्गवचने भिन्ने न हीनाधिकतापि वा ।
उपमादूषणायालं यत्रोद्वेगो न धीमताम् ॥ ५१ ॥
15 स्त्रीव गच्छति षण्ढो ऽयं वक्त्येषा स्त्री पुमानिव ।
प्राणा इव प्रियो ऽयं मे विद्या धनमिवार्जिता ॥ ५२ ॥
भवानिव महीपाल देवराजो विराजते ।
अलमंशुमतः कक्षामारोढुं तेजसा नृपः ॥ ५३ ॥
इत्येवमादौ सौभाग्यं न जहात्येव जातु चित् ।
20 अस्त्येव क्व चिदुद्वेगः प्रयोगे वाग्विदां यथा ॥ ५४ ॥
हंसीव धवलश्चन्द्रः सरांसीवामलं नभः ।
भर्तृभक्तो भटः श्वेव खद्योतो भाति भानुवत् ॥ ५५ ॥
ईदृशं वर्ज्यते सद्भिः कारणं तत्र चिन्त्यताम् ।
गुणदोषविचाराय स्वयमेव मनीषिभिः ॥ ५६ ॥
25 इववद्वायथाशब्दाः समाननिभसंनिभाः ।
तुल्यसंकाशनीकाशप्रकाशप्रतिरूपकाः ॥ ५७ ॥
प्रतिपक्षप्रतिद्वंद्विप्रत्यनीकविरोधिनः ।
सदृक्सदृशसंवादिसजातीयानुवादिनः ॥ ५८ ॥
प्रतिबिम्बप्रतिच्छन्दसरूपसमसंमिताः ।
30 सलक्षणसदृक्षाभसपक्षोपमितोपमाः ॥ ५९ ॥
कल्पदेशीयदेश्यादिः प्रख्यप्रतिनिधी अपि ।
सवर्णतुलितौ शब्दौ ये चान्यूनार्थवादिनः ॥ ६० ॥

समासश्च बक्रुव्रीहिः शशाङ्कवदनादिषु ।
स्पर्धते जयति द्वेष्टि द्रुह्यति प्रतिगर्जति ॥ ६१ ॥
आक्रोशत्यवजानाति कदर्थयति निन्दति ।
विडम्बयति संधत्ते क्सतीर्ष्यत्यसूयति ॥ ६२ ॥
5 तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति ।
तेन सार्धं विगृह्णाति तुलां तेनाधिरोहति ॥ ६३ ॥
तत्पदव्यां पदं धत्ते तस्य कक्षां विगाहते ।
तमन्वेत्यनुबध्नाति तच्छीलं तन्निषेधति ॥ ६४ ॥
तस्य चानुकरोतीति शब्दाः सादृश्यसूचकाः ।
10 उपमायामिमे प्रोक्ताः कवीनां बुद्धिसौख्यदाः ॥ ६५ ॥
उपमैव तिरोभूतभेदा रूपकमुच्यते ।
यथा बाकुलता पाणिपद्मं चरणपल्लवः ॥ ६६ ॥
अङ्गुल्यः पल्लवान्यासन्कुसुमानि नखार्चिषः ।
बाहू लते वसन्तश्रीस्त्वं नः प्रत्यक्षचारिणी ॥ ६७ ॥
15 इत्येतदसमस्ताख्यं समस्तं पूर्वरूपकम् ।
स्मितं मुखेन्दोर्ज्योत्स्नेति समस्तव्यस्तरूपकम् ॥ ६८ ॥
ताम्राङ्गुलिदलश्रेणि नखदीधितिकेसरम् ।
ध्रियते मूर्ध्नि भूपालैर्भवच्चरणपङ्कजम् ॥ ६९ ॥
अङ्गुल्यादौ दलादित्वं पादे चारोप्य पद्मताम् ।
20 तद्योग्यस्थानविन्यासादेतत्सकलरूपकम् ॥ ७० ॥
अकस्मादेव ते चण्डि स्फुरिताधरपल्लवम् ।
मुखं मुक्तारुचो धत्ते घर्माम्भःकणमञ्जरीः ॥ ७१ ॥
मञ्जरीकृत्य घर्माम्भः पल्लवीकृत्य चाधरम् ।
नान्यथा कृतमत्रास्यमतो ऽवयवरूपकम् ॥ ७२ ॥
25 वल्गितभ्रु गलद्धर्मजलमालोहितेक्षणम् ।
विवृणोति मदावस्थामिदं वदनपङ्कजम् ॥ ७३ ॥
अविकृत्य मुखाङ्गानि मुखमेवारविन्दताम् ।
आसीद्गमितमत्रेदमतो ऽवयविरूपकम् ॥ ७४ ॥
मदपाटलगण्डेन रक्तनेत्रोत्पलेन ते ।
30 मुखेन मुग्धः सो ऽप्येष जनो रागमयः कृतः ॥ ७५ ॥
एकाङ्गरूपकं चैतदेवं द्विप्रभृतीन्यपि ।
अङ्गानि रूपयन्त्यत्र योगायोगौ भिदाकरौ ॥ ७६ ॥

स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदं मुखम् ।
इति पुष्पद्विरेफाणां संगत्या युक्तरूपकम् ॥ ७७ ॥
इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलं मुखम् ।
इति ज्योत्स्नोत्पलायोगादयुक्तं नाम रूपकम् ॥ ७८ ॥
5 रूपणादङ्गिनो ऽङ्गानां रूपणारूपणाश्रयात् ।
रूपकं विषमं नाम ललितं जायते यथा ॥ ७९ ॥
मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना ।
नर्तितभ्रूलतेनालं मर्दितुं भुवनत्रयम् ॥ ८० ॥
हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ।
10 जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥ ८१ ॥
विशेषणसमग्रस्य रूपं केतोर्यदीदृशम् ।
पादे तदर्पणादेतत्सविशेषणरूपकम् ॥ ८२ ॥
न मीलयति पद्मानि न नभो ऽप्यवगाहते ।
त्वन्मुखेन्दुर्ममासूनां हरणायैव कल्पते ॥ ८३ ॥
15 अक्रिया चन्द्रकार्याणामन्यकार्यस्य च क्रिया ।
अत्र संदर्श्यते यस्माद्विरुद्धं नाम रूपकम् ॥ ८४ ॥
गाम्भीर्येण समुद्रो ऽसि गौरवेणासि पर्वतः ।
कामदत्वाच्च लोकानामसि त्वं कल्पपादपः ॥ ८५ ॥
गाम्भीर्यप्रमुखैरत्र हेतुभिः सागरो गिरिः ।
20 कल्पद्रुमश्च क्रियते तदिदं हेतुरूपकम् ॥ ८६ ॥
राजहंसोपभोगार्हं भ्रमरप्रार्थ्यसौरभम् ।
सखि वक्त्राम्बुजमिदं तवेति श्लिष्टरूपकम् ॥ ८७ ॥
इष्टं साधर्म्यवैधर्म्यदर्शनाद्गौणमुख्ययोः ।
उपमाव्यतिरेकाख्यं रूपकद्वितयं यथा ॥ ८८ ॥
25 अयमालोहितच्छायो मदेन मुखचन्द्रमाः ।
संनद्धोदयरागस्य मुखस्य प्रतिगर्जति ॥ ८९ ॥
चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः ।
असमग्रो ऽप्यसौ शश्वदयमापूर्णमण्डलः ॥ ९० ॥
मुखचन्द्रस्य चन्द्रत्वमित्थमन्योपतापिनः ।
30 न ते सुन्दरि संवादीत्येतदाक्षेपरूपकम् ॥ ९१ ॥
मुखेन्दुरपि ते चण्डि मां निर्दहति निर्दयम् ।
भाग्यदोषान्ममैवेति तत्समाधानरूपकम् ॥ ९२ ॥

मुखपङ्कजरङ्गे ऽस्मिन्भ्रूलतानर्तकी तव ।
लीलानृत्यं करोतीति रम्यं रूपकरूपकम् ॥ ९३ ॥
नैतन्मुखमिदं पद्मं न नेत्रे भ्रमराविमौ ।
एतानि केसराण्येव नैता दन्तार्चिषस्तव ॥ ९४ ॥
5 मुखादित्वं निवर्त्यैव पद्मादित्वेन रूपणात् ।
उद्भावितगुणोत्कर्षं तत्त्वापह्नवरूपकम् ॥ ९५ ॥
न पर्यन्तो विकल्पानां रूपकोपमयोरतः ।
दिङ्मात्रं दर्शितं धीरैरनुक्तमनुमीयताम् ॥ ९६ ॥

---

## XXI. Sadânanda's Vedântasâra.

नमो गणेशाय ।
10 अखण्डं सच्चिदानन्दमवाङ्मनसगोचरम् ।
आत्मानमखिलाधारमाश्रये ऽभीष्टसिद्धये ॥

**Auf dass das Gewünschte in Erfüllung gehe, flüchte ich mich zur untheilbaren, aus Sein, Geist und Wonne bestehenden, dem Worte und dem Geiste sich entziehenden Allseele, der Grundlage von Allem.**

15 अर्थतो ऽप्यद्वयानन्दानतीतद्वैतभानतः ।
गुरूनाराध्य वेदान्तसारं वक्ष्ये यथामति ॥

**Indem ich zuvor Verehrung bezeuge meinem Lehrer Advajânanda, der, weil der Schein der Zweiheit bei ihm geschwunden ist, auch dem Sinne nach advajânanda (dessen Wonne die Einheit ist) ist, gehe ich daran, so weit meine Einsicht reicht, 20 den Kern des Vedânta vorzutragen.**

1. वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरकसूत्रादीनि च । **Unter Vedânta versteht man die Upanishad als Autorität und die dazu verhelfenden Schriften, wie z. B. die Çârîrakasûtra.**

2. अस्य वेदान्तप्रकरणत्वात्तदीयैरेवानुबन्धैस्तद्वत्तासिद्धेर्न ते पृथगालोचनीयाः । **Weil 25 es sich von selbst versteht, dass die Erfordernisse zu unserem Werke, da es den Vedânta behandelt, mit den Erfordernissen zu diesem übereinstimmen, so brauchen dieselben nicht besonders in Betracht gezogen zu werden.**

3. तत्रानुबन्धो नामाधिकारिविषयसंबन्धप्रयोजनानि । **Im Vedânta versteht man**

अस्तापास्तसमस्तभासि नभसः पारं प्रयाते रवा-
वास्थानीं समये समं नृपजनः सायन्तने संपतन् ।
संप्रत्येव सरोरुहद्युतिमुषः पादांस्तवासेवितुं
प्रीत्युत्कर्षकृतो दृशामुदयनस्येन्दोरिवोद्वीक्षते ॥

5 सागरिका । परिवृत्य राजानमवलोक्य सस्पृहम् । कधं । अअं सो राआ उदअणो जस्स अहं तादेण दिण्णा । ता परपेसणाकलुसिदं मे सरीरं एदस्स दंसणेण बहुमदं संवुत्तं ।

राजा । कथम् । उत्सवापहृतचेतोभिः संध्यातिक्रमो ऽप्यस्माभिर्नोपलक्षितः । देवि । पश्य । उदयतटान्तरितमियं प्राची सूचयति दिङ्निशानाथम् ।
परिपाण्डुना मुखेन प्रियमिव हृदयस्थितं रमणी ।

10 देवि । तदुत्तिष्ठ । आवासाभ्यन्तरं प्रविशाव ।

सर्व उत्थाय परिक्रामन्ति ।

सागरिका । कधं । पट्ठिदा देवी । भोदु । तुरिदं गमिस्सं । राजानं सस्पृहं दृष्ट्वा निःश्वस्य च । हद्धी हद्धी । मन्दभाइणीए मए पेक्खिदुं पि चिरं ण पारिदो अअं जणो । इति निष्क्रान्ता ।

15 राजा । परिक्रामन् ।

देवि त्वन्मुखपङ्कजेन शशिनः शोभातिरस्कारिणा
पश्याब्जानि विनिर्जितानि सहसा गच्छन्ति विच्छायताम् ।
श्रुत्वा ते परिवारवारवनितागीतानि भृङ्गाङ्गना
लीयन्ते मुकुलान्तरेषु शनकैः संजातलज्जा इव ॥

20 इति निष्क्रान्ताः सर्वे ।

इति प्रथमो ऽङ्कः ।

---

ततः प्रविशति शारिकापञ्जरव्यग्रहस्ता सुसंगता ।

सुसंगता । हद्धी हद्धी । अध कहिं दाणिं मम हत्थे इमं सारिअं णिक्खिविअ गदा मे पिअसही साअरिआ भविस्सदि । अन्यतो दृष्ट्वा । एसक्खु णिउणिआ इदो ज्जेव्व आ-
25 अच्छदि । ततः प्रविशति निपुणिका ।

निपुणिका । उवलद्धोक्खु मए भट्टिणो वुत्तन्तो । ता जाव गदुअ भट्टिणीए णिवेदेमि । इति परिक्रामति ।

सुसंगता । हला णिउणिए । कहिं दाणिं तुमं विम्हआक्खित्तहिअआ विअ इधट्ठिदं मं अवधीरिअ इदो अदिक्कमसि ।

30 निपुणिका । कधं । सुसंगदा । हला सुसंगदे । सुट्ठु तए जाणिदं । एदं खु मम विम्हअस्स कारणं । अज्ज किल भट्टा सिरिपव्वदादो आअदस्स सिरिखण्डदासणामधेअस्स धम्मिअस्स सआसादो अआलकुसुमसंजणणदोहलं सिक्खिअ अत्तणो परिगहिदं णोमालिअं कुसुम-

समिद्धिसोत्थिदं करिस्सदित्ति एदं वुत्तन्तं देवीए णिवेदिदुं पेसिदम्हि । तुमं उण कहिं पट्ठिदा ।

सुसंगता । पिअसहिं साअरिअं अण्णेसिदुं ।

निपुणिका । दिट्ठा मए साअरिआ गहिदसमुग्गअचित्तफलअवत्तिआ कअलीहरं पविसन्ती । ता गच्छ पिअसहिं । अहं पि देवीसआसं गमिस्सं ।

इति निष्क्रान्ते ।

इति प्रवेशकः ।

---

ततः प्रविशति गृहीतचित्रफलका मदनावस्थां नाटयन्ती सागरिका ।

सागरिका । हिअअ । पसीद पसीद । किं इमिणा आआसमेत्तफलएण दुल्लहजणपत्थणाणुबन्धेण । अण्णं च । जेणज्जेव्व दिट्ठमेत्तेण ईदिसो संतावो वड्ढदि पुणो वि तं जेव्व पेक्खिदुं अहिलससित्ति अहो दे मूढदा । अदिणिसंस हिअअ । जम्मदो पहुदि सह संवड्ढिदं इमं जणं परिच्चइअ खणमेत्तदंसणपरिचिदं जणं अणुगच्छन्तो ण लज्जसि । अध वा को तुह दोसो । अणङ्गसरपडनभीदेण तए एव्वं अज्झवसिदं । भोदु । अणङ्गं दाव उवालहिस्सं । सास्रम् । भअवं कुसुमाउह । णिज्जिदसुरासुरो भविअ इत्थीजणं पहरन्तो ण लज्जसि । सव्वधा मम मन्दभाइणीए इमिणा दुण्णिमित्तेण अवस्सं मरणं उवट्ठिदं । फलकमवलोक्य । ता जाव ण को वि इध आअच्छदि ताव आलेक्खसमप्पिदं तं अहिमदं जणं पेक्खिअ जधासमीहिदं करिस्सं । सावष्टम्भमेकमना भूत्वा नाट्येन फलकं गृहीत्वा निःश्वस्य । जइ वि अदिसज्झसेण वेवदि अअं अदिमेत्तं मे अग्गहत्थो तधा वि तस्स जणस्स अण्णो दंसणोवाओ णत्थित्ति जधा तधा आलिहिअ पेक्खिस्सं । इति नाट्येन लिखति ।

ततः प्रविशति सुसंगता ।

सुसंगता । एदं खु कअलीहरं । ता जाव पविसामि । प्रविश्यावलोक्य च सविस्मयम् । किं उण एसा गरुआणुराआक्खित्तहिअआ आलिहन्ती ण मं पेक्खदि । ता जाव दिट्ठिपधं से परिहरिअ णिरूवइस्सं । स्वैरं पृष्ठतो ऽस्याः स्थित्वा दृष्ट्वा च सहर्षम् । कधं । भट्ठा आलिहिदो । साहु साअरिए साहु । अध वा ण कमलाअरं वज्जिअ राअहंसी अण्णस्सिं अहिरमदि ।

सागरिका । सबाष्पम् । आलिहिदो मए एसो । किं उण णिवडन्तबाहसलिला मे दिट्ठी पेक्खिदुं ण पभवदि । ऊर्ध्वमुखी संहरन्ती सुसंगतां दृष्ट्वोत्तरीयेण प्रच्छादयन्ती विलोक्य स्मितं कृत्वा । कधं । सुसंगदा । सहि सुसंगदे । इदो उवविस ।

सुसंगता । उपविश्य फलकं दृष्ट्वा च । सहि । को एसो तए आलिहिदो ।

सागरिका । सहि । णं पउत्तमहूसवो भअवं अणङ्गो ।

सुसंगता । सस्मितम् । अहो दे णिउणत्तणं । किं उण सुण्णं विअ चित्तं पडिभादि । ता अहं पि आलिहिअ रदिसणाधं करिस्सं । वर्तिकां गृहीत्वा नाट्येन लिखति ।

सागरिका । विलोक्य सक्रोधम् । सहि । कीस तए अहं एत्थ आलिहिदा ।

सुसंगता । सहि । किं अआरणे कुप्पसि । जादिसो तए कामदेवो आलिहिदो तादिसी मए एदी आलिहिदा । ता अण्णधासंभाविणि किं तुह एदिणा आलविदेण । कधेहि सव्वं वुत्तन्तं ।

सागरिका । सलज्जा स्वगतम् । णं जाणिदम्हि पिअसहीए । प्रकाशम् । पिअसहि । 5 महदिक्खु मे लज्जा । ता तधा करेसु जधा ण एदं वुत्तन्तं अवरो को वि जाणिस्सदि ।

सुसंगता । सहि । मा लज्ज मा लज्ज । ईदिसस्स कण्णआरअणस्स अवस्सं जेव्व ईदिसे वरे अहिलासेण होदव्वं । तधा वि जधा ण को वि अवरो एदं वुत्तन्तं जाणिस्सदि तधा करेमि । एदाए उण मेधाविणीए सारिआए एत्थ कारणेण होदव्वं । कदा वि एसा इमस्स आलावस्स गहिदक्खरा कस्स वि पुरदो मन्तिस्सदित्ति ।

10 सागरिका । सहि । अदो वि मे अधिअदरं संतावो वड्ढदि ।

सुसंगता । सागरिकाया हृदये हस्तं दत्त्वा । सहि । समस्सस समस्सस । जाव इमादो दिग्घिआदो णलिणीवत्ताइं मुणालिआओ अ गेण्हिअ लहुं लहुं आअच्छामि । निष्क्रम्य पुनः प्रविश्य नाट्येन नलिनीपत्रैः शयनीयं मृणालैर्वलयानि च रचयित्वा परिशिष्टानि नलिनीपत्राणि सागरिकाया हृदये निक्षिपति ।

15 सागरिका । सहि । अवणेहि इमाइं णलिनीवत्ताइं मुणालिआओ अ । अलं एदिणा । कीस अआरणे अत्ताणअं आआसेसि । णं भणामि ।

दुल्लहजणाणुराओ लज्जा गरुई परव्वसो अप्पा ।

पिअसहि विसमं पेम्मं मरणं सरणं णवरि एक्कं ॥

इति मूर्छति ।

20 नेपथ्ये कलकलः ।

कण्ठे कृत्तावशेषं कनकमयमधः शृङ्खलादाम कर्ष-

न्क्रान्त्वा द्वाराणि हेलाचलचरणरणत्किङ्किणीचक्रवालः ।

दत्तातङ्को ऽङ्गनानामनुसृतसरणिः संभ्रमादश्वपालैः

प्रभ्रष्टो ऽयं प्लवंगः प्रविशति नृपतेर्मन्दिरं मन्दुरायाः ॥

25 अपि च । नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-

मन्तः कञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।

पर्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं

कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः ॥

सुसंगता । आकर्ण्य ससंभ्रमम् । सहि । उट्ठेहि उट्ठेहि । एसो क्खु दुट्ठवाणरो इदो जेव्व 30 आअच्छदि ।

सागरिका । किं दाणिं करिस्सं ।

सुसंगता । एहि । इमस्सिं तमालविडवन्धआरे पविसिअ एदं अदिवाहेम्ह ।

इति परिक्रम्यैकान्ते पर्यवस्थिते ।

सागरिका । सुसंगदे । कधं । तए चित्तफलओ उज्झिदो । कदा वि को वि तं पेक्खिस्सदि ।

सुसंगता । अइ मुट्ठिदे । किं अज्ज वि चित्तफलएण करिस्ससि । एसो वि दधिभत्तलम्पडो एदं पञ्जरं उग्घाडिअ दुट्ठवाणरो अदिक्कन्तो । एसक्खु मेधाविणी उड्डीणा अक्खदो
5 गच्छदि । ता एहि । लहुं अणुसरम्ह ।

नेपथ्ये ।

ही ही भो । अच्छरीअं अच्छरीअं ।

सागरिका । सभयं विलोक्य । सुसंगदे । जाणीअदि । पुणो वि दुट्ठवाणरोज्जेव्व आअच्छदित्ति ।

10 सुसंगता । दृष्ट्वा विहस्य । अइ कादरे । मा भाआहि । भट्टिणो परिवासवत्तिक्खु एसो अज्जवसन्तओ ।

ततः प्रविशति विदूषकः ।

विदूषकः । ही ही भो । अच्छरीअं अच्छरीअं । साहु रे सिरिखण्डदास धम्मिअ साहु ।

सागरिका सस्पृहमवलोकयति ।

15 सुसंगता । सहि । किं एदिणा दिट्ठेण । दूरीभूदक्खु सारिआ । ता अणुसरम्ह ।

इति निष्क्रान्ते ।

विदूषकः । साहु रे सिरिखण्डदास साहु जेण दिण्णमेत्तेणज्जेव्व दोहलएण ईदिसी णोमालिआ संवुत्ता जेण णिरन्तरुब्भिण्णकुसुमगुच्छच्छादिदविडवा उवहसन्ती विअ लक्खीअदि देवीपरिग्गहिदं माहवीलदं । ता जाव गदुअ पिअवअस्सस्स णिवेदेमि । परि-
20 क्रम्यावलोक्य च । एसोक्खु पिअवअस्सो तस्स दोहलअस्स लद्धप्पच्चअदाए परोक्खं पि तं णोमालिअं पच्चक्खं विअ कुसुमिदं पेक्खन्तो हरिसुप्फुल्ललोअणो इदोज्जेव्व आअच्छदि । ता जाव णं उवसप्पामि । इति राजानं प्रति गतः ।

ततः प्रविशति यथानिर्दिष्टो राजा ।

राजा । सहर्षम् ।

25 उद्दामोत्कलिकां विपाण्डुररुचं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः ।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन्कोपविपाटलद्युति मुखं देव्याः करिष्याम्यहम् ॥

विदूषकः । सहसोपसृत्य । जअदु जअदु पिअवअस्सो । भो वअस्स । दिट्ठिआ वड्ढसि ।
30 जेण दिण्णमेत्तेण इति पुनः पठति ।

राजा । वयस्य । कः संदेहः । अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः । तदादेशय मार्गं येन वयमपि तदालोकनेन चक्षुषः फलमनुभवामः ।

विदूषकः । साटोपम् । एदु एदु भवं ।

इत्युभौ परिक्रामतः ।

विदूषकः । आकर्ण्य सभयं निवृत्य राजानं हस्ते गृहीत्वाससंभ्रमम् । भो वअस्स । एहि । पलाअम्ह ।

राजा । किमर्थम् ।

5 विदूषकः । भो । एदस्सिं बउलपाअवे को वि भूदो पडिवसदि ।

राजा । धिङ्मूर्ख । विस्रब्धं गम्यताम् । कुत ईदृशानामत्र संभवः ।

विदूषकः । फुडक्खरं ज्जेव्व मन्तेदि । जइ मम वअणं ण पत्तिआअसि ता अग्गदो भविअ सअं ज्जेव्व आअण्णेहि ।

राजा । तथा कृत्वा श्रुत्वा च ।

10 स्पष्टाक्षरमिदं तावन्मधुरं स्त्रीस्वभावतः ।
अल्पाङ्गत्वादनिर्ह्रादि मन्ये वदति शारिका ॥

ऊर्ध्वं निरूप्य स्मितं कृत्वा । शारिकैव ।

विदूषकः । ऊर्ध्वं निरूप्य । कधं । सच्चं ज्जेव्व सारिआ ।

राजा । विहस्य । एवम् ।

15 विदूषकः । भो वअस्स । तुमं भआलुओ ज्जेण सारिअं भूदं ति मन्तेसि ।

राजा । धिङ्मूर्ख । यदात्मना कृतं तन्मयि संभावयसि ।

विदूषकः । भो । जइ एव्वं मक्खु मं णिवारेसु । सरोषं दण्डकाष्ठमुद्यम्य । आ दासीए धीए सारिए । तुमं जाणासि । सच्चं ज्जेव्व बम्हणो भाअदि त्ति । ता चिट्ठ दाव । इमिणा पिसुणजणहिअअकुडिलेण दण्डअट्ठेण परिपक्कं विअ फलं इमादो बउलपाअवादो तुमं पाड20 इस्सं । इति हन्तुमुद्यतः ।

राजा । निवारयन् । किमप्येषा रमणीयं व्याहरति । तत्किमेनां त्रासयसि । शृणुवस्तावत् ।

इत्याकर्णयतः ।

विदूषकः । भो । एसा भणादि । सहि । को एसो तए आलिहिदो । सहि । णं पउत्त25 महूसवो भअवं अणङ्गो त्ति । पुणो वि एसा भणादि । सहि । कीस तए अहं एत्थ आलिहिदा । सहि । किं अआरणे कुप्पसि । जादिसो तए कामदेवो आलिहिदो तादिसी मए रदी आलिहिदा । ता अण्णधासंभाविणि किं तुह एदिणा आलविदेण । कधेहि सव्वं वुत्तन्तं ति । भो वअस्स । किं णेदं ।

राजा । वयस्य । एवं तर्कयामि । कयापि हृदयवल्लभो ऽनुरागादालिख्य कामदेवव्यपदे30 शेन निह्नुतः । तत्सख्यापि प्रत्यभिज्ञाय वैदग्ध्यात्सापि तत्रैव रतिव्यपदेशेनालिखितेति ।

विदूषकः । छोटिकां दत्त्वा । जुज्जदि क्खु एदं ।

राजा । वयस्य । तूष्णीं भव । पुनरप्येषा व्याहरति ।

विदूषकः । पुनराकर्ण्य । भो । एसा भणादि । मा लज्ज मा लज्ज । ईदिसस्स कण्णआर-

अणास्स अवस्सं जेव्व ईदिसे वरे अहिलासेण होदव्वं ति । भो वअस्स । जा एसा आलि-
हिदा सवहु कअआ दंसणीआ ।

राजा । यद्येवमवहितौ शृणुवस्तावत् । अस्त्यवकाशो ऽस्माकं कौतूहलस्य ।

विदूषकः । पुनराकर्ण्य । भो । सुदं तए जं एदाए मन्तिदं । सहि । अवणेहि इमाइं णा-
5 लिणीवत्ताइं मुणालिआओ अ । अलं एदिणा । कीस अआरणे अत्ताणअं आआसेसित्ति ।

राजा । वयस्य । न केवलं श्रुतमभिप्रायो ऽपि लक्षित एव ।

विदूषकः । भो । मा पण्डिदगव्वं उव्वह । अहं दे सव्वं सुणिअ वक्खाणइस्सं । सु-
णम्ह दाव । किं कुरुकुराअदि दासीए धीआ सारिआ ।

राजा । युक्तमभिहितम् ।

10 पुनराकर्णयतः ।

विदूषकः । भो । एसा दासीए धीआ चदुव्वेदो विअ बम्हणो रिचाइं पढिदुं पउत्ता ।

राजा । वयस्य । किमप्यन्यचेतसा मया नावधारितम् । तत्कथय । किमनयोक्तम् ।

विदूषकः । भो । एदं एदाए पढिदं । दुल्लह इत्यादि पुनः पठति ।

राजा । विहस्य । साधु महाब्राह्मण साधु । को ऽन्य एवंविधं ब्राह्मणं भवन्तं मुक्त्वैवं-
15 विधानामृचामभिज्ञः ।

विदूषकः । किं खु दाणिं एदं ।

राजा । मूर्ख । गाथिकेयम् । कयापि श्लाघ्ययौवनया प्रियतममनासादयन्त्या जीवितनि-
रपेक्षयोक्तम् ।

विदूषकः । उच्चैर्विहस्य । अहह । किं एदेहिं वक्कभणिदेहिं । उज्जुअं जेव्व किं
20 ण भणासि जधा । मं अणासादअन्तीएत्ति । अण्णधा को अण्णो कुसुमचाववव्वदेसेण णिण्हु-
वीअदि । उच्चैर्विहस्य । अहह ।

राजा । ऊर्ध्वमवलोक्य । धिङ्मूर्ख । किमुच्चैर्विहसता त्वयेयमुत्त्रासिता येनोड्डीयान्यत्र
क्वापि गता ।

उभौ निरूपयतः ।

25 विदूषकः । विलोक्य । भो एसक्खु कअलीहरं गदा । ता लहुं अणुसरम्ह ।

राजा । एवं भवतु । परिक्रम्य ।

दुर्वारां मदनशरव्यथां वहन्त्या कामिन्या यदभिहितं पुरः सखीनाम् ।
तद्भूयः शिशुशुकशारिकाभिरुक्तं धन्यानां श्रवणपथातिथित्वमेति ॥

विदूषकः । भो वअस्स । एदं कअलीहरं । जाव पविसम्ह ।

30 इत्युभौ प्रविशतः ।

विदूषकः । किं एदाए दासीए धीआए सारिआए । इध दाव मन्दमारुदुव्वेल्लिदबा-
लकअलीदलसीदले सिलादले उवविसिअ मुहुत्तअं वीसमम्ह ।

राजा । यदभिरुचितं भवते ।

इत्युपविशतः। राजा दुर्वारामित्यादि पुनः पठति।

विदूषकः। पार्श्वतो ऽवलोक्य। एदिणा क्खु उण उग्घाडिदडुवारेण ताए सारिआए पञ्जरेण होदव्वं।

राजा। वयस्य। निरूप्यताम्।

5 विदूषकः। जं भवं आणवेदि। परिक्रम्यावलोक्य च। एसो वि चित्तफलओ। जाव णं गेण्हामि। फलकं गृहीत्वा निरूप्य च सहर्षम्। भो वअस्स। दिट्ठिआ वड्ढसि।

राजा। सकौतुकम्। वयस्य। किमेतत्।

विदूषकः। भो। एदं क्खु तं जं मए भणिदं। तुमं ज्जेव्व एत्थ आलिहिदो। अण्णधा को अण्णो कुसुमचाववदेसेण णिण्हुवीअदित्ति।

10 राजा। सहर्षं हस्तौ प्रसार्य। सखे। उपनय।

विदूषकः। भो। ण एदं दंसइस्सं। सा वि कण्णआ इध ज्जेव्व आलिहिदा चिट्ठदि। ता किं पारितोसिएण विणा ईदिसं कण्णआरअणं दंसीअदि।

राजा। कटकं समर्पयन्नेव बलाद्गृहीत्वा सविस्मयं पश्यति। वयस्य।

लीलावधूतपद्मा कथयन्ती पक्षपातमधिकं नः।

15 मानसमुपैति केयं चित्रगता राजहंसीव॥

अपि च। विधायापूर्वपूर्णेन्दुमस्या मुखमभूद्ध्रुवम्।

धाता निजासनाम्भोजविनिमीलनदुःस्थितः॥

ततः प्रविशति सागरिका सुसंगता च।

सुसंगता। सहि। ण समासादिदा सारिआ। चित्तफलअं पि दाव इमादो कअलीहरादो गेण्हिअ लहुं गच्छम्ह।

20

सागरिका। सहि। एव्वं करेम्ह।

इत्युपसर्पतः।

विदूषकः। भो। कीस उण एसा अवणादमुही आलिहिदा।

सुसंगता। आकर्ण्य। सहि। जधा वसन्तओ मन्तेदि तधा तक्केमि। भट्टिणा वि इध ज्जेव्व होदव्वं ति। ता कअलीगुम्मन्तरिदाओ भविअ पेक्खम्ह।

25

इत्युभे आकर्णयतः।

राजा। वयस्य। पश्य पश्य। विधायापूर्वपूर्णेन्दुमित्यादि पुनः पठति।

सुसंगता। सहि। दिट्ठिआ वड्ढसि। एसो दे पिअवल्लहो तुमं ज्जेव्व णिव्वण्णअन्तो चिट्ठदि।

सागरिका। सहि। किं एत्थ परिहाससीलदाए इमं जणं लहुं करेसि।

30 विदूषकः। राजानं चालयित्वा। णं भणामि। कीस एसा अवणादमुही आलिहिदत्ति।

राजा। वयस्य। ननु शारिकयैव सर्वमावेदितम्।

सुसंगता। दंसिदं क्खु मेधाविणीए अत्तणो मेधावित्तणं।

विदूषकः। भो। अवि सुहाअदि दे एसा लोअणाइं ण वा।

सागरिका । ससाध्वसं स्वगतम् । किं एसो भणिस्सदित्ति डं सच्चं मरणज्ञीविदाणं अन्तरे वट्टामि ।

राजा । वयस्य । किमुच्यते । सुखयतीति । पश्य ।

कृच्छ्रेणोरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नितम्बस्थले
5 मध्ये ऽस्यास्त्रिवलीतरंगविषमे निःष्पन्दतामागता ।
मे दृष्टिस्तृषितेव संप्रति शनैरारुह्य तुङ्गौ स्तनौ
साकाङ्क्षं मुहुरीक्षते जललवप्रस्यन्दिनी लोचने ॥

सुसंगता । सहि । सुदं तए ।

सागरिका । सहि । तुमं ज्जेव सुणा जाए आलेक्खविणानं वणीअदि ।

10 विदूषकः । भो वअस्स । जस्स उणा ईदिसीओ वि पिअसमागमं बहुमणन्ति तस्स दे अत्तणो उवरि को परिभवो जेणा इमाए ज्जेव आलिहिदं अत्ताणाअं णा पेक्खसि ।

राजा । निर्वर्ण्य । वयस्य । अनयालिखितो ऽहमिति यत्सत्यमिदानीमात्मन्येव बहुमानः । तत्कथं न पश्यामि ।

भाति पतितो लिखन्त्यास्तस्या बाष्पाम्बुशीकरकणौघः ।
15 स्वेदोद्गम इव करतलसंस्पर्शादेव मे वपुषि ॥

सागरिका । आत्मगतम् । हिअअ । समस्सस समस्सस । मणोरधो वि दे एत्तिअं भूमिं णा गदो ।

सुसंगता । सहि । तुमं ज्जेव एक्का सलाहणीआ जाए भट्टा एव्वं संतोसीअदि ।

विदूषकः । पार्श्वतो ऽवलोक्य । भो । एदं अवरं सरसकमलिणीदलमुणालविरइदं ताए
20 मअणावत्थासूअअं सअणीअं लक्खीअदि ।

राजा । निपुणमभिलक्षितम् । तथा हि ।

परिम्लानं पीनस्तनजघनसङ्गादुभयत-
स्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलतात्क्षेपवलनैः
25 कृशाङ्ग्याः संतापं वदति बिसिनीपत्रशयनम् ॥

अपि च । स्थितमुरसि विशालं पद्मिनीपत्रमेत-
त्कथयति न तथान्तर्मन्मथोत्थामवस्थाम् ।
अतिशयपरितापग्लापिताभ्यां यथास्याः
स्तनयुगपरिणाहं मण्डलाभ्यां ब्रवीति ॥

30 विदूषकः । नाट्येन मृणालिकां गृहीत्वा । भो । अअं अवरो ताए ज्जेव पीणथणाकिलिस्सन्तकोमलमुणालहारो । ता पेक्खदु भवं ।

राजा । गृहीत्वोरसि विन्यस्य । अयि जडप्रकृते ।

परिच्युतस्तत्कुचकुम्भमध्यात्किं शोषमायासि मृणालहार ।
न सूक्ष्मतन्तोरपि तावकस्य तत्रावकाशो भवतः कथं स्यात् ॥

सुसंगता । आत्मगतम् । हद्धी हद्धी । गरुआणुराआखित्तहिअओ असंबद्धं भट्टा मन्तिदुं पउत्तो । ता ण जुत्तं अदो अवरं उवेक्खिदुं । भोदु एव्वं दाव । प्रकाशम् । सहि । जस्स कदे 5 तुमं आअदा सो अअं दे पुरदो चिट्ठदि ।

सागरिका । सासूयम् । सुसंगदे । कस्स कदे अहं आअदा ।

सुसंगता । विहस्य । अइ अण्णसङ्किदे । णं चित्तफलअस्स । ता गेण्ह एदं ।

सागरिका । सरोषम् । सुसंगदे । अउसलम्हि तुह ईदिसाणं आलावाणं । ता गमिस्सं । इति गन्तुमिच्छति ।

10 सुसंगता । सागरिकां गृहीत्वा । अइ असहणे । इध दाव मुहुत्तअं चिट्ठ जाव इमादो कअलीहरादो चित्तफलअं गेण्हिअ आअच्छामि । इति कदलीगृहं प्रविशति ।

विदूषकः । सुसंगतां दृष्ट्वा ससंभ्रमम् । भो वअस्स । पच्छादेहि एदं चित्तफलअं । एसा क्खु देवीए परिचारिआ सुसंगदा आअदा ।

राजा पटान्तेन फलकं प्रच्छादयति ।

15 सुसंगता । उपसृत्य । जअदु जअदु भट्टा ।

राजा । सुसंगते । कथमहमिहस्थो भवत्या ज्ञातः ।

सुसंगता । भट्टा । ण केवलं तुमं चित्तफलएण समं सव्वो वि वुत्तन्तो मए विण्णादो । ता देवीए गदुअ णिवेदइस्सं । इति गन्तुमिच्छति ।

विदूषकः । अपवार्य सभयम् । भो । सव्वं संभावीअदि । मुहरा क्खु एसा गब्भदासी । 20 ता परितोसेहि णं ।

राजा । युक्तमभिहितम् । सुसंगतां हस्ते गृहीत्वा । सुसंगते । क्रीडामात्रमेवैतत् । तथापि नाकारणे त्वया देवी खेदयितव्या । कर्णाभरणं समर्पयति ।

सुसंगता । प्रणम्य सस्मितम् । भट्टा । अलं सङ्काए । मए वि भट्टिणो पसादेण कीलिदं जेव्व । ता किं कण्णाहरणएण । एसोज्जेव्व मे गरुओ पसादो जं कीस तए अहं एत्थ चि- 25 त्तफलए आलिहिदत्ति कुविदा मे पिअसही साअरिआ । ता एसज्जेव्व पसादीअदु ।

राजा । ससंभ्रममुत्थाय । क्वासौ । क्वासौ ।

सुसंगता । एदु एदु भट्टा ।

सर्व उत्तिष्ठन्ति ।

विदूषकः । भो । अहं गेण्हामि चित्तफलअं । कदा वि एदिणा पुणो वि कज्जं भ- 30 विस्सदि ।

सर्वे कदलीगृहान्निष्क्रामन्ति ।

सागरिका । राजानं दृष्ट्वा सहर्षं ससाध्वसं सकम्पं चात्मानं प्रति । हद्धी हद्धी । एदं पेक्खिअ ण सक्कणोमि पदादो पदं पि गन्तुं । ता किं दाणिं एत्थ करिस्सं ।

विदूषकः। सागरिकां दृष्ट्वा। अच्छरीअं अच्छरीअं। ईदिसं पि णाम कण्णआरअणं माणुसलोए दीसदि। ता तक्केमि। पआवदिणो वि एदं णिम्मिअ विम्हओ समुप्पण्णोत्ति।

राजा। वयस्य। ममाप्येतदेव मनसि वर्तते।

दृशः पृथुतरीकृता जितनिजाब्जपत्रत्विष-
5 श्चतुर्भिरपि साधु साध्विति मुखैः समं व्याहृतम्।
शिरांसि चलितानि विस्मयवशाद्ध्रुवं वेधसा
विधाय ललनां जगत्त्रयललामभूतामिमाम्॥

सागरिका। सासूयं सुसंगतामवलोक्य। सुसंगदे। ईदिसो चित्तफलओ तए आणीदो। इति गन्तुमिच्छति।

10 राजा। दृष्टिं रुषा क्षिपसि भामिनि यद्यपीमां
स्निग्धेयमेष्यति तथापि न रूक्षभावम्।
त्यक्त्वा त्वरां व्रज पदस्खलितैरयं ते
खेदं गमिष्यति गुरुर्नितरां नितम्बः॥

सुसंगता। भट्टा। अदिकोवणा क्खु एसा। ता हत्थे गेण्हिअ पसादेहि णं।

15 राजा। सानन्दम्। यथाह भवती। सागरिकां हस्ते गृहीत्वा स्पर्शं नाटयति।

विदूषकः। भो। एसा क्खु तए अपुव्वा सिरी समासादिदा।

राजा। वयस्य। सत्यम्।

श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः।
कुतो ऽन्यथा पतत्येष स्वेदच्छद्मामृतद्रवः॥

20 अयि। प्रसीद। न खलु सखीजने युक्तमेवंविधं कोपानुबन्धं कर्तुम्।

सुसंगता। सहि। अदक्खिणा सि दाणिं तुमं जा एव्वं भट्टिणा हत्थे अवलम्बिदा अज्ज वि कोवं ण मुञ्चसि।

सागरिका। सभ्रूभङ्गम्। सुसंगदे। इदाणिं पि ण विरमसि।

विदूषकः। भोदि। बुभुक्खिदो बम्हणो विअ किं कुप्पसि।

25 सागरिका। सहि। तए सह ण बोलइस्सं।

राजा। अयि कोपने। नैतद्युक्तं समानप्रतिपत्तिषु सखीषु।

विदूषकः। एसा क्खु अवरा देवी वासवदत्ता।

राजा सचकितं सागरिकां मुञ्चति।

सागरिका। सुसंगदे। किं दाणिं एत्थ करिस्सं।

30 सुसंगता। सहि। एदाए तमालवीधिआए अन्तरिदाओ भविअ णिक्कमम्ह।

इति निष्क्रान्ते।

राजा। विलोक्य सविस्मयम्। वयस्य। क्वासौ देवी वासवदत्ता।

विदूषकः। एदं मए भणिदं जधा। एसक्खु अवरा देवी वासवदत्ता अदिदीह्कोवणादाए संवुत्तत्ति।

राजा। धिङ्मूर्ख।

प्राप्ता कथमपि दैवात्कण्ठमनीतैव सा प्रकटरागा।
5 रत्नावलीव कान्ता मम हस्ताद्भ्रंशिता भवता॥

ततः प्रविशति वासवदत्ता काञ्चनमाला च।

वासवदत्ता। हञ्जे कञ्चणमाले। अध केत्तिअदूरे दाणिं सा अज्जउत्तपरिगह्दिा णोमालिआ।

काञ्चनमाला। भट्टिणि। एदं कअलीहरं अदिक्कमिअ दीसदि ज्जेव्व। ता एदु 10 भट्टिणी।

इति परिक्रामतः।

राजा। वयस्य। क्वेदानीं प्रियतमा द्रष्टव्या।

काञ्चनमाला। भट्टिणि। जधा समीवे भट्टा मन्तेदि तधा तक्केमि। तुमं ज्जेव्व पडिवालअन्तो चिट्ठदित्ति। ता उवसप्पदु भट्टिणी।

15 वासवदत्ता। उपसृत्य। जअदु जअदु अज्जउत्तो।

राजा। अपवार्य। वयस्य। प्रच्छादय चित्रफलकम्।

विदूषको गृहीत्वोत्तरीयेण प्रच्छादयति।

वासवदत्ता। अज्जउत्त। कुसुमिदा णोमालिआ।

राजा। देवि। प्रथममप्यागतैरस्माभिस्त्वं चिरयसीति नैव दृष्टा। तदेहि। सहितावेव 20 पश्याव।

वासवदत्ता। निर्वर्ण्य। अज्जउत्तमुहराएणज्जेव्व मए जाणिदं जधा। कुसुमिदा सा णोमालिअत्ति। ता ण गमिस्सं।

विदूषकः। भोदि। जइ एव्वं ता जिदं अम्हेहिं। इति बाहू प्रसार्य नृत्यन्कक्षतटात्फलके निपतिते विषादं नाटयति।

25 राजापवार्य विदूषकमङ्गुल्या तर्जयति।

विदूषकः। अपवार्य। भो। मा कुप्प। अहं ज्जेव्व एत्थ जाणिस्सं।

काञ्चनमाला। फलकं गृहीत्वा। पेक्खदु पेक्खदु भट्टिणी। किं एत्थ आलिहिदं।

वासवदत्ता। निरूप्य। अअं अज्जउत्तो। इअं पि साअरिआ। राजानं प्रति। अज्जउत्त। किं णेदं।

30 राजा। सवैलक्ष्यमपवार्य। वयस्य। किं ब्रवीमि।

विदूषकः। भोदि। अप्पा किल दुक्खं आलिहीअदित्ति मम वअणं सुणिअ पिअवअस्सेण एदं विण्णाणं दंसिदं।

राजा। यथाह वसन्तकस्तथैवैतत्।

वासवदत्ता । फलकं निर्दिश्य । अज्जउत्त । एसा वि जा अवरा तुह समीवे दीसदि एदं किं अज्जवसन्तअस्स विण्णाणं ।

राजा । सवैलक्ष्यस्मितम् । देवि । अलमन्यथा संभावितेन । इयं हि मया स्वचेतसैव परिकल्प्यालिखिता न तु दृष्टपूर्वा ।

5 विदूषकः । भोदि । सच्चं । सवामि बम्हत्तणेण जइ ईदिसी कदा वि दिट्ठपुव्वा ।

काञ्चनमाला । अपवार्य । भट्टिणि । घुणक्खरं पि कदा वि संवददि ।

वासवदत्ता । अपवार्य । अइ उज्जुए । वसन्तओक्खु एसो । ण जाणासि तुमं एदस्स वक्कभणिदं । प्रकाशम् । अज्जउत्त । मम उण एदं चित्तफलअं पेक्खन्तीए सीसवेअणा समुप्पण्णा । ता गमिस्सं ।

10 राजा । पटान्तेन गृहीत्वा । देवि ।

प्रसीदेति ब्रूयामिदमसति कोपे न घटते
करिष्याम्येवं नो पुनरिति भवेदभ्युपगमः ।
न मे दोषो ऽस्तीति त्वमिदमपि च ज्ञास्यसि मृषा
किमेतस्मिन्वक्तुं क्षममिति न वेद्मि प्रियतमे ।

15 वासवदत्ता । सविनयं पटान्तमाकर्षन्ती । अज्जउत्त । मा अण्णधा संभावेहि । सच्चं जेव्व सीसवेअणा समुप्पण्णा । ता गमिस्सं ।

इति निष्क्रान्ते ।

विदूषकः । भो । दिट्ठिआ वड्ढसि । खेमेण अम्हाणं अदिक्कन्ता अआलवादावली ।

राजा । धिङ्मूर्ख । कृतं परितोषेण । आभिजात्या निगूढो न लक्षितस्त्वया देव्याः को-
20 पानुबन्धः । तथा हि ।

भ्रूभङ्गे सहसोद्गते ऽपि वदनं नीतं परां नम्रता-
मीषन्मां प्रति भेदकारि हसितं नोक्तं वचो निष्ठुरम् ।
अन्तर्बाष्पजडीकृतं प्रभुतया चक्षुर्न विस्फारितं
कोपश्च प्रकटीकृतो दयितया मुक्तश्च न प्रश्रयः ॥

25 तदेहि । देवीसकाशमेव गच्छाव ।

इति निष्क्रान्तौ ।

इति द्वितीयो ऽङ्कः ।

---

ततः प्रविशति मदनिका ।

मदनिका । आकाशे । कोसम्बिए । अवि दिट्ठा तए भट्टिणीसआसे कञ्चणमाला ण वा ।
30 आकर्ण्य । किं भणासि । को वि कालो ताए आअच्छिअ गदाएत्ति । ता कहिं दाणिं पेक्खिस्सं । अग्रतो ऽवलोक्य । एसक्खु कञ्चणमाला इदोज्जेव्व आअच्छदि । ता जाव उवसप्पामि ।

ततः प्रविशति काञ्चनमाला।

काञ्चनमाला। सोत्प्रासम्। साहु रे वसन्तम साहु। अदिसइदो तए अमच्चजोअंधराअणो इमाए संधिविग्गहचिन्ताए।

मदनिका। उपसृत्य सस्मितम्। हला कञ्चणमाले। किं अज्जवसन्तएण कदं जेण सो 5 एव्वं सलाहीअदि।

काञ्चनमाला। हला मअणिए। किं तुह एदिणा पुच्छिदेण पओअणं। ण तुमं इमं रहस्सं रक्खिदुं पारेसि।

मदनिका। सवामि देवीए चरणेहिं जइ कस्सवि पुरदो पआसेमि।

काञ्चनमाला। जइ एव्वं ता सुण। अज्जक्खु मए राअउलादो पडिणिवत्तन्तीए चित्तसा-10 लिआदुवारे अज्जवसन्तअस्स सुसंगदाए समं आलावो सुदो।

मदनिका। सकौतुकम्। सहि। कीदिसो।

काञ्चनमाला। जधा। सुसंगदे। णक्खु साअरिअं वज्जिअ पिअवअस्सस्स किं पि अस्स-त्थदाए कारणं। ता चिन्तेहि एत्थ पडिआरं ति।

मदनिका। तदो सुसंगदाए किं भणिदं।

15 काञ्चनमाला। एव्वं भणिदं। अज्जक्खु देवीए चित्तफलअवुत्तन्तसङ्किदाए साअरिअं र-क्खिदुं मम हत्थे समप्पअन्तीए जं णेवत्थं मे पसादीकदं तेणज्जेव्व विरइददेवीवेसं साअ-रिअं गेण्हिअ अहं पि कञ्चणमालावेसधारिणी भविअ पदोसे इध आगमिस्सं। तुमं पि चित्तसालिआदुवारे मं पडिवालइस्ससि। तदो माहवीलदामण्डवे ताए सह भट्टिणो संगमो भविस्सदित्ति।

20 मदनिका। हदासा तुमं सुसंगदे जा एव्वं परिअणवच्छलं देविं वञ्चेसि।

काञ्चनमाला। हला। तुमं दाणिं कहिं पट्ठिदा।

मदनिका। अस्सत्थसरीरस्स भट्टिणो कुसलवुत्तन्तं जाणिदुं गदा तुमं चिरअसित्ति उ-त्तम्मन्तीए देवीए पेसिदम्हि।

काञ्चनमाला। अदिउज्जुआ दाणिं देवी जा एव्वं पत्तिआअदि। परिक्रम्यावलोक्य च। 25 एसोक्खु भट्टा अस्सत्थदामिसेण अत्तणो मअणावत्थं पच्छादअन्तो दन्ततोरणावडभीए उव-विट्ठो चिट्ठदि। ता एहि। एदं वुत्तन्तं भट्टिणीए णिवेदेम्ह।

इति निष्क्रान्ते।

इति प्रवेशकः।

---

ततः प्रविशति मदनावस्थां नाट्यमुपविष्टो राजा।

30 राजा। निःश्वस्य।

संतापो हृदय स्मरानलकृतः संप्रत्ययं सह्यतां
नास्त्येवोपशमो ऽस्य तां प्रति पुनः किं त्वं मुधा-ताम्यसि।
यन्मूढेन मया तदा कथमपि प्राप्तो गृहीत्वा चिरं
विन्यस्तस्त्वयि सान्द्रचन्दनरसस्पर्शो न तस्याः करः॥

5 अहो महदाश्चर्यम्। तथा हि।

मनश्चलं प्रकृत्यैव दुर्लक्ष्यं च तथापि मे।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः॥

ऊर्ध्वमवलोक्य। भोः कुसुमधन्वन्।

बाणाः पञ्च मनोभवस्य नियतास्तेषामसंख्यो जनः
10 प्रायो ऽस्मद्विध एव लक्ष्यमिति यल्लोके प्रसिद्धिं गतम्।
दृष्टं तत्त्वयि विप्रतीपमधुना यस्मादसंख्यैरयं
विद्धः कामिजनः शरैरशरणो नीतस्त्वया पञ्चताम्॥

विचिन्त्य। न तथाहमेतदवस्थमात्मानं चिन्तयामि यथान्तर्निगूढकोपसंभाराया देव्या दर्शनगोचरगतां तामेव तपस्विनीं सागरिकाम्। तथा हि।

15 ह्रिया सर्वस्याग्रे हरति विदितास्मीति वदनं
द्वयोर्दृष्ट्वालापं कलयति कथामात्मविषयाम्।
सखीषु स्मेरासु प्रकटयति वैलक्ष्यमधिकं
प्रिया प्रायेणास्ते हृदयनिहितातङ्कविधुरा॥

कथं तद्वार्तान्वेषणाय गतश्चिरयति वसन्तकः।

20 ततः प्रविशति हृष्टो वसन्तकः।

विदूषकः। सपरितोषम्। ही ही भो। कोसम्बीरज्जलाहेण वि ण तादिसो पिअवअस्सस्स परितोसो आसि जादिसो मम सआसादो पिअवअणं सुणिअ भविस्सदित्ति तक्केमि। परिक्रम्यावलोक्य च। जधा पिअवअस्सो इमं जेव्व दिसं अवलोअअन्तो चिट्ठदि तधा तक्केमि। मं जेव्व पडिवालेदित्ति। ता जाव णं उवसप्पामि। उपसृत्य। भो वअस्स। दि-
25 ट्ठिआ वड्ढसि समीहिदकज्जसिद्धीए।

राजा। सहर्षम्। वयस्य। अपि कुशलं प्रियायाः सागरिकायाः।

विदूषकः। अइरेण सअं जेव्व पेक्खिअ जाणिस्ससि।

राजा। सपरितोषम्। दर्शनमपि भविष्यति।

विदूषकः। सगर्वम्। भो। कीस ण भविस्सदि जस्स दे उवहसिदबिहप्फदिबुद्धि-
30 विभवो अहं अमच्चो।

राजा। न खलु किं चिन्न संभाव्यते त्वयि। तथापि कथय। श्रोतुमिच्छामि।

विदूषकः। कर्णे। एव्वं एव्वं।

राजा। सपरितोषम्। साधु वयस्य साधु। इदं ते पारितोषिकम्। इति हस्तादवतार्य कटकं ददाति।

विदूषकः। कटकं परिधायात्मानं निर्वर्ण्य। भो। इमं दाव सुहसुवण्णकडअमण्डिदहत्थं अत्तणो बम्हणीए गदुअ दंसइस्सं।

5 राजा। निवारयन्। सखे। पश्चाद्दर्शयिष्यसि। ज्ञायतां तावत्। किमवशिष्टमह्न इति।

विदूषकः। विलोक्य। किं ण पेक्खदि भवं। एसोक्खु गरुआणुराआखित्तहिअओ संकावङ्ढिदिणसंकेदो विअ अत्थगिरिसिहरकाणणं अणुसरदि भअवं सहस्सरस्सी।

राजा। विलोक्य। सखे। सम्यगुपलक्षितम्। पर्यवसितमहः। तथा हि।

10 अध्वानं नैकचक्रः प्रभवति भुवनभ्रान्तिदीर्घं विलङ्घ्य
प्रातः प्राप्तुं रथो मे पुनरिति मनसि न्यस्तचिन्तातिभारः।
संध्याकृष्टावशिष्टस्वकरपरिकरैः स्पृष्टहेमारपङ्क्तिं
व्याकृष्यावस्थितो ऽस्तक्षितिभृति नयतीवैष दिक्चक्रमर्कः॥

अपि च। यातो ऽस्मि पद्मनयने समयो ममैष
15 सुप्ता मयैव भवती प्रतिबोधनीया।
प्रत्यायनामयमितीव सरोरुहिण्याः
सूर्यो ऽस्तमस्तकनिविष्टकरः करोति॥

तदुत्तिष्ठ। तत्रैव माधवीलतामण्डपे प्रियासंकेतसमयं प्रतिपालयाव।

इत्युत्तिष्ठतः।

20 विदूषकः। विलोक्य। भो वअस्स। पेक्ख पेक्ख। एसोक्खु बकुलीकदविरलवणराइसंणिवेसो गहिदघणपङ्कपीवरवराहमहिसकसणच्छवी पसरदि पुव्वदिसं पच्छादअन्तो तिमिरसंघादो।

राजा। विलोक्य। वयस्य। सम्यगुपलक्षितम्। तथा हि।

पुरः पूर्वामेव स्थगयति ततो ऽन्यामपि दिशं
25 क्रमात्क्रामन्नद्रिद्रुमपुरविभागांस्तिरयति।
उपेतः पीनत्वं तदनु भुवनस्येक्षणपथं
तमःसंघातो ऽयं हरति हरकण्ठद्युतिहरः॥

तदादेशय मार्गम्।

विदूषकः। एदु एदु भवं।

30 इति परिक्रामतः।

विदूषकः। भो। एदं क्खु समन्तदो बहलतमालपाअवदाए पिण्डीकदन्धआरं विअ उज्जाणं। ता कधं एत्थ मग्गो लक्खीअदि।

राजा। गन्धमाघ्राय। वयस्य। गच्छाग्रतः। सुपरिज्ञात एव मार्गः। तथा हि।

पालीयं चम्पकानां नियतमयमसौ सुन्दरः सिन्दुवारः
सान्द्रा वीथी तथेयं बकुलविटपिनां पाटलापङ्क्तिरेषा ।
आघ्रायाघ्राय गन्धं विविधमधिगतैः पादपैरेवमस्मि-
न्व्यक्तिं पन्थाः प्रयाति द्विगुणतरतमोनिह्नुतो ऽप्येष चिह्नैः ॥

5 परिक्रामतः ।

विदूषकः । भो वअस्स । एदं क्खु णिबिडत्तमत्तमहुअर कुसुमामोदवासिददहदिसामुहं मसिणमणिकुट्टिमसुहाअत्तचरणसंचारसूइदं माहवीलदामण्डवं पविसिअ चिट्ठ तुमं । जाव अहं देवीवेसधारिणिं साअरिअं गेण्हिअ लहुं लहुं आअच्छामि ।

राजा । वयस्य । तेन हि त्वर्यताम् ।

10 विदूषकः । भो । मा उत्तम्म । एसो आअदोम्हि । इति निष्क्रान्तः ।

राजा । यावदहमस्यां मरकतवेदिकायामुपविश्य प्रियतमागमनं प्रतिपालयामि । उपविश्य । अहो । को ऽपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनो जनमभिनवं प्रति पक्षपातः । तथा हि ।

प्रणयविशदां दृष्टिं वक्त्रे ददाति न शङ्किता
15 घटयति घनं कण्ठाश्लेषे रसान्न पयोधरौ ।
वदति बहुशो गच्छामीति प्रयत्नधृताप्यहो
रमयतितरां संकेतस्था तथापि हि कामिनी ॥

अये । कथं चिरयति वसन्तकः । किं नु खलु विदितः स्यादयं वृत्तान्तो देव्या ।

ततः प्रविशति वासवदत्ता काञ्चनमाला च ।

20 वासवदत्ता । हञ्जे कञ्चणमाले । सच्चं जेव्व मम वेसं करिअ साअरिआ अज्जउत्तं अहिसारइस्सदि ।

काञ्चनमाला । कधं । अण्णधा भट्टिणीए णिवेदीअदि । अध वा चित्तसालिआदुवारट्ठिदो वसन्तओ दे पच्चअं उप्पादइस्सदि ।

वासवदत्ता । तेण हि तहिं जेव्व गच्छम्ह ।

25 काञ्चनमाला । एदु एदु भट्टिणी ।

इति परिक्रामतः ।

ततः प्रविशति कृतावगुण्ठनो वसन्तकः ।

विदूषकः । कर्णं दत्त्वा । जधा चित्तसालिआदुवारे पदसद्दो सुणीअदि तधा तक्केमि । आअदा साअरिअत्ति ।

30 काञ्चनमाला । भट्टिणि । इअं सा चित्तसालिआ । ता जाव वसन्तअस्स संणं देमि । इति छोटिकां ददाति ।

विदूषकः । उपसृत्य सस्मितम् । सुसंगदे । सुसरिसोक्खु तए कदो कञ्चणमालावेसो । अध साअरिआ दाणिं कहिं ।

काञ्चनमाला । अङ्गुल्या दर्शयन्ती । णं एसा ।
विदूषकः । दृष्ट्वा सविस्मयम् । एसा फुडं जेव्व देवी वासवदत्ता ।
वासवदत्ता । साशङ्कमात्मगतम् । कधं । जाणिदम्हि ।
विदूषकः । भोदि साअरिए । इदो एहि ।
5 वासवदत्ता विहस्य काञ्चनमालामवलोकयति ।
काञ्चनमाला । अपवार्य विदूषकमङ्गुल्या तर्जयन्ती । हदास । सुमरिस्ससि एदं वअणं ।
विदूषकः । तुवरदु तुवरदु साअरिआ । पुव्वदिसादो उग्गच्छदि भअवं मिअलञ्छणो ।
राजा । अये । उपस्थितप्रियासमागमस्यापि किमिदमत्यर्थमुत्ताम्यति मे चेतः । अथ वा
तीव्रः स्मरसंतापो न तथादौ बाधते यथासन्ने ।
10 तपति प्रावृषि सुतरामभ्यर्णजलागमो दिवसः ॥
विदूषकः । कर्णं दत्त्वा । भोदि साअरिए । एसोक्खु पिअवअस्सो तुमं जेव्व उद्दिसिअ उक्कण्ठाणिब्भरं मन्तेदि । ता णिवेदेमि से तुह आगमणं ।
वासवदत्ता शिरःसंज्ञां ददाति ।
विदूषकः । उपसृत्य । भो वअस्स । एसा आअदा साअरिआ ।
15 राजा । सहसोत्थाय । क्कासौ क्कासौ ।
विदूषकः । णं एसा ।
राजा । उपसृत्य । प्रिये सागरिके ।
शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भागर्भनिभं तवोरुयुगलं बाहू मृणालोपमौ ।
20 इत्याह्लादकराखिलाङ्गि रभसान्निःशङ्कमालिङ्ग्य मा-
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय ॥
वासवदत्ता । अपवार्य । कञ्चणमाले । एव्वं पि मन्तिअ अज्जउत्तो पुणो वि मं आलविस्सदि । अहो अच्छरीअं ।
काञ्चनमाला । अपवार्य । भट्टिणि । एव्वं णेदं । किं उण साहसिआणं पुरिसाणं ण
25 संभावीअदि ।
विदूषकः । भोदि साअरिए । वीसत्था भविअ पिअवअस्सं आलवेहि । अज्ज दाव ताए णिच्चरुट्टाए देवीए वासवदत्ताए दुव्वअणेहिं कडुइदा कण्णा संपदं सुहाअन्तु तुह महुरवअणेहिं ।
वासवदत्ता । अपवार्य सरोषस्मितम् । कञ्चणमाले । अहं ईदिसी कडुभासिणी । वस-
30 न्तओ उण पिअंवदो ।
काञ्चनमाला । अपवार्य । हदास । सुमरिस्ससि एदं वअणं ।
विदूषकः । भो वअस्स । पेक्ख पेक्ख । एसोक्खु कुविदकामिणीकवोलसरिसो सव्वं जेव्व दिसं पआसअन्तो उदिदो भअवं मिअलञ्छणो ।

राजा । प्रिये । पश्य ।

उदयोद्भिन्न एव त्वद्वदनापहृतकान्तिसर्वस्वः ।
फूत्कर्तुमिवोर्ध्वकरः स्थितः पुरस्तान्निशानाथः ॥

ननु प्रिये दर्शितमनेनोद्बद्धता अउत्वम् । कुतः ।

5 किं पद्मस्य रुचिं न हन्ति नयनानन्दं विधत्ते न किं
वृद्धिं वा झषकेतनस्य कुरुते नालोकमात्रेण किम् ।
वक्त्रेन्दौ तव सत्ययं यदपरः शीतांशुरभ्युद्गतो
दर्पः स्यादमृतेन चेदिह तदप्यस्त्येव बिम्बाधरे ॥

वासवदत्ता । सरोषमवगुण्ठनमपनीय । अज्जउत्त । किं अहं सच्चं जेव्व साअरिआ ।
10 तुमं उण साअरिआणुरत्तहिअओ सव्वं जेव्व साअरिआमअं पेक्खसि ।

राजा । सवैलक्ष्यमपवार्य । कथं । देवी वासवदत्ता । वयस्य । किमेतत् ।

विदूषकः । सविषादम् । भो वअस्स । अम्हाणं जीविदसंसओ जादो एसो ।

राजा । उपविश्याञ्जलिं बद्ध्वा । प्रिये वासवदत्ते । प्रसीद प्रसीद ।

वासवदत्ता । अश्रूणि विधारयन्ती । अज्जउत्त । मा एव्वं भण । अण्णगदक्खु एदे अक्खरा ।

15 विदूषकः । आत्मगतम् । किं दाणिं एत्थ करिस्सं । भोदु एव्वं दाव । प्रकाशम् । भो-
दि । महाणुभावक्खु तुमं । ता खमीअदु दाव एक्को अवराहो पिअवअस्सस्स ।

वासवदत्ता । अज्जवसन्तअ । णं पढमसंगमे विग्घं करन्तीए मए ज्जेव्व एदस्स अवरद्धं ।

राजा । एवं प्रत्यक्षदृष्टव्यलीकः किं विज्ञापयामि ।

आताम्रतामपनयामि विलक्ष एव
20 लाक्षाकृतां चरणयोस्तव देवि मूर्ध्ना ।
कोपोपरागजनितां तु मुखेन्दुबिम्बे
हर्तुं क्षमो यदि परं करुणा मयि स्यात् ।

इति पादयोः पतति ।

वासवदत्ता । हस्तेन वारयन्ती । अज्जउत्त । उट्ठेहि उट्ठेहि । णिल्लज्जाक्खु सा जणो
25 जो अज्जउत्तस्स एव्वं हिअअं जाणिअ पुणो वि कुप्पदि । ता वीसत्थं चिट्ठदु अज्जउत्तो ।
अहं गमिस्सं । इति गन्तुमिच्छति ।

काञ्चनमाला । भट्टिणि । करेहि से पसादं । एव्वं चरणपडिदं महाराअं उज्झिअ गदाए
देवीए अवस्सं पच्छादावेण होदव्वं ।

वासवदत्ता । अवेहि अपण्डिदे । को एत्थ पसादस्स कालो ।

30 इति निष्क्रान्ते ।

राजा । देवि । प्रसीद । प्रसीद ।

विदूषकः । भो । उट्ठेहि । गदा देवी । ता कीस एत्थ अरण्णरुदिदं करेसि ।

राजा । मुखमुत्तानीकृत्य । कथम् । प्रसादमकृत्वैव गता देवी ।

विदूषकः। कधं ण कदो पसादो। अज्ज वि अक्खदसरीरा चिट्ठम्ह।

राजा। धिङ्मूर्ख। किमेवमुपहससि माम्। ननु त्वत्कृत एवायमापतितो ऽस्माकमनर्थः। कुतः।

समारूढप्रीतिः प्रणयबहुमानादनुदिनं
5 व्यलीकं वीक्ष्येदं कृतमकृतपूर्वं खलु मया।
प्रिया मुञ्चत्यद्य स्फुटमसहना जीवितमसौ
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति॥

विदूषकः। भो। रुट्ठा देवी किं करिस्सदित्ति ण जाणामि। साअरिआए उण दुक्करं जीविदं ति तक्केमि।

10 राजा। निःश्वस्य। एवमेतत्।

ततः प्रविशति वासवदत्तावेषधारिणी सागरिका।

सागरिका। सोद्वेगम्। दिट्ठिआ। इमिणा विरइददेवीवेसेण इमादो चित्तसालादो णिक्कमन्ती केण वि ण लक्खिदम्हि। ता किं दाणिं करिस्सं। इति सास्रं चिन्तयति।

विदूषकः। भो। किं मूढो विअ चिट्ठसि। चिन्तेहि दाव एत्थ पडिआरं।

15 राजा। वयस्य। ननु तदेव चिन्तयामि।

सागरिका। विमृश्य। वरं दाणिं सअं जेव्व अत्ताणअं उब्बन्धिअ उवरदा भविस्सं ण उण जाणिदसंकेदवुत्तन्ताए देवीए सुसंगदाए सह परिभूदम्हि। ता जाव असोअपाअवे गदुअ जधासमीहिदं करिस्सं। इति परिक्रामति।

राजा। वयस्य। देवीप्रसादनं विना नान्यमुपायं पश्यामि। तदुत्तिष्ठ। तत्रैव गच्छाव।

20 इति परिक्रामतः।

विदूषकः। आकर्ण्य। भो। चिट्ठ। पदसद्दो जधा सुणीअदि तधा तक्केमि। गहिदपच्छादावा पुणो वि देवी आअदा भवेत्ति।

राजा। महानुभावा देवी। कदाचिदेवमपि स्यात्। तत्त्वरितं निरूप्यताम्।

विदूषकः। जं भवं आणवेदि। इति परिक्रम्य निरूपयति।

25 सागरिका। ता जाव इध जेव्व माहवीलदाए असोअपाअवे पासं करिस्सं। इति लतापाशं रचयन्ती। हा ताद। हा अम्ब। एसक्खु अणाधा असरणा विवज्जामि मन्दभाइणी। इति कण्ठे लतापाशमर्पयति।

विदूषकः। पश्यन्नुच्चैः ससंभ्रमम्। कधं। देवी वासवदत्ता अत्ताणअं उब्बन्धिअ वावादेदि।

30 राजा। ससंभ्रममुपसृत्य। क्वासौ क्वासौ।

विदूषकः। भो। णं एसा।

राजा। उपसृत्य कण्ठात्पाशमपनयति। अयि साहसकारिणि। किमिदमकार्यं क्रियते।

मम कण्ठगताः प्राणाः पाशे कण्ठगते तव ।
अतः स्वार्थप्रयत्नो ऽयं त्यज्यतां साहसं प्रिये ॥

सागरिका । राजानं दृष्ट्वा सहर्षमात्मगतम् । कधं । अज्जउत्तो । एदं पेक्खिअ कदत्था
भविअ सुहेण विअ जीविदं परिच्चइस्सं । प्रकाशम् । अज्जउत्त । मुञ्च मुञ्च । पराहीणो क्खु
5 अअं जणो ण पुणो वि मरिदुं ईदिसं अवसरं पावेदि । तुमं पि देवीए अवराहिणं अत्ताणअं
मा करेसु । इति पुनः कण्ठे पाशं दातुमिच्छति ।

राजा । निर्वर्ण्य सहर्षम् । कथम् । प्रिया मे सागरिका । कण्ठात्पाशमाक्षिप्य ।

अलमलमतिमात्रं साहसेनामुना ते त्वरितमयि विमुञ्च त्वं लतापाशमेतम् ।
चलितमिव निरोद्धुं जीवितं जीवितेशे क्षणमिह मम कण्ठे बाहुपाशं विधेहि ॥

10 इति कण्ठे बाहुं कृत्वा स्पर्शं नाटयति । सखे । इयमनभ्रा वृष्टिः ।

विदूषकः । भो । एव्वं णोदं जइ अआलवादावली विअ देवी आअच्छिअ अण्णधा ण
करिस्सदि ।

ततः प्रविशति वासवदत्ता काञ्चनमाला च ।

वासवदत्ता । हञ्जे कञ्चणमाले । तं तधा चरणणिवडिदं अज्जउत्तं अवधीरअन्तीए मए
15 अदिणिट्ठुरं ज्जेव्व कदं । ता दाणिं सअं ज्जेव्व गदुअ अज्जउत्तं अणुणइस्सं ।

काञ्चनमाला । को अण्णो देविं वज्जिअ ईदिसं मन्तेदि । वरं सो ज्जेव्व दुज्जणीकदो भोदु
ण उण देवी । ता एदु एदु भट्टिणी ।

इति परिक्रामतः ।

राजा । अयि मुग्धे । किमद्यापि मध्यस्थतया विफलमनोरथाः क्रियामहे ।

20 काञ्चनमाला । भट्टिणि । जधा समीवे भट्टा मन्तेदि तधा तक्केमि । तुमं ज्जेव्व अणुणेदुं
आअच्छदित्ति ।

वासवदत्ता । सहर्षम् । तेण हि अलक्खिदा भविअ पुट्ठदो गदुअ कण्ठे गेण्हिस्सं ।

विदूषकः । भोदि साअरिए । वीसत्था भविअ कीस पिअवअस्सं ण आलवेसि ।

वासवदत्ता । सविषादं कर्णं दत्त्वा । हञ्जे कञ्चणमाले । कधं । साअरिआ इध ज्जेव्व चि-
25 ट्ठदि । ता सुणम्ह दाव । पच्छा उवसप्पिस्सं ।

इति तथा स्थिते ।

सागरिका । भट्टा । किं इमिणा अलिअदक्खिण्णेण जीविदादो वल्लहदराए देवीए अत्ता-
णअं अवराहिणं करेसि ।

राजा । अयि । मिथ्यावादिनी खल्वसि । कुतः ।

30 श्वासोत्कम्पिनि कम्पितं स्तनयुगे मौने प्रियं भाषितं
वक्त्रे ऽस्याः कुटिलीकृतभ्रुणि रुषा यातं मया पादयोः ।
इत्थं नः सहजाभिजात्यजनिता सेवैव देव्याः परं
प्रेमाबन्धविवर्धिताधिकरसा प्रीतिस्तु या सा त्वयि ॥

वासवदत्ता । सहसोपसृत्य सरोषम् । अज्जउत्त । जुत्तं एदं ।

राजा । दृष्ट्वा सवैलक्ष्यम् । देवि । न खल्वकारणे मामुपालब्धुमर्हसि । त्वामेव मत्वा वेषसादृश्याद्विप्रलब्धा वयमिहागताः । तत्क्षम्यताम् । इति पादयोः पतति ।

वासवदत्ता । सरोषम् । अज्जउत्त । उट्ठेहि उट्ठेहि । किं अज्ज वि सहजाहिजादीए 5 सेवादुक्खं अणुभवीअदि ।

राजा । आत्मगतम् । कथम् । एतदपि श्रुतम् । सर्वथा देवीप्रसादनं प्रति निष्प्रत्याशीभूताः स्मः । इत्यधोमुखस्तिष्ठति ।

विदूषकः । भोदि । तुमं किल अत्ताणअं उब्बन्धिअ वावादेसित्ति वेससारिस्समोहिदेण मए पिअवअस्सो आणीदो । जइ मम वअणं ण पत्तिआअसि ता पेक्ख एदं लदा- 10 पासं । इति हस्ते गृहीत्वा लतापाशं दर्शयति ।

वासवदत्ता । हञ्जे कञ्चणमाले । एदिणा ज्जेव्व लदापासेण बन्धिअ गेण्ह एदं बम्हणबडुअं । अङ्गुल्या तर्जयन्ती । एदं पि दुव्विणीदकण्णअं अग्गदो करेहि ।

काञ्चनमाला । जं भट्टिणी आणवेदि । इति लतापाशेन विदूषकं बद्ध्वा । सहासम् । अणुभव दाव अत्तणो दुच्चअस्स फलं । साअरिए । तुमं पि अग्गदो होहि ।

15 सागरिका । आत्मगतम् । हद्धी । अकदपुण्णाए मए मरिदुं पि अत्तणो इच्छाए ण पारिदं ।

विदूषकः । सविषादं राजानमवलोक्य । भो वअस्स । सुमरेहि मं अणाधं बम्हणबडुअं देवीए बन्धणादो विवज्जन्तं ।

सर्वानादाय वासवदत्ता निष्क्रान्ता ।

20 राजा । कष्टं भोः कष्टम् ।

किं देव्याः कृतदीर्घरोषमुषितस्निग्धस्मितं तन्मुखं
त्रस्तां सागरिकां नु संभृतरुषा संतर्ज्यमानां तया ।
बद्ध्वा नीतमितो वसन्तकमहं किं चिन्तयामीत्यहो
सर्वाकारकृतव्यथः क्षणमपि प्राप्नोमि नो निर्वृतिम् ॥

25 तत्किमिदानीमिह स्थितेन प्रयोजनम् । देवीं प्रसादयितुमभ्यन्तरमेव प्रविशामि । इति निष्क्रान्तः ।

इति तृतीयोऽङ्कः ।

---

ततः प्रविशति गृहीतरत्नमाला सुसंगता ।

30 सुसंगता । सकरुणम् । हा पिअसहि साअरिए । हा लज्जालुए । हा सहीजणवच्छले । हा उदारसीले । हा सोम्मदंसणे । कहिं दाणिं तुमं मए पेक्खिदव्वा । इति रोदिति । ऊर्ध्वमवलोक्य निःश्वस्य च । अइ देव्वहदअ । जइ सा असामण्णरूवसोहा तादिसी तए णिम्मिदा ता कीस उण ईदिसं अवत्थन्तरं पाविदा । इअं च रअणमाला जीविदणिरासाए

ताए कस्स वि बम्हणस्स हत्थे पडिवादेसुत्ति भणिअ मम हत्थे समप्पिदा। ता जाव कं पि बम्हणं अण्णेसामि। परिक्रम्यावलोक्य च। एसोक्खु अज्जवसन्तओ इदोज्जेव्व आअच्छदि। ता जाव एदस्सज्जेव्व पडिवादइस्सं।

ततः प्रविशति हृष्टो वसन्तकः।

5 विदूषकः। ही ही भो। अज्जक्खु पिअवअस्सेण पसादिदाए देवीए वासवदत्ताए बन्धणादो मोआविअ सहत्थदिण्णेहिं मोदएहिं उदरं मे पूरिदं। अण्णं च। पट्टंसुअजुअलं कण्णाहरणं च दिण्णं। ता जाव पिअवअस्सं पेक्खामि।

सुसंगता। रुदती सहसोपसृत्य। अज्जवसन्तअ। चिट्ठ दाव।

विदूषकः। दृष्ट्वा। कधं। सुसंगदा। भोदि सुसंगदे। किं णिमित्तं रोदीअदि। किं णु
10 साअरिआए अच्चाहिदं संवुत्तं।

सुसंगता। एदं जेव्व णिवेदइस्सं। सक्खु तवस्सिणी देवीए उज्जइणिं पेसिदत्ति पवादं कदुअ अद्धरत्ते उवट्ठिदे ण जाणीअदि कहिं णीदत्ति।

विदूषकः। सोद्वेगम्। हा भोदि साअरिए। अदिणिग्घणं देवीए कदं।

सुसंगता। इअं च रअणमाला ताए जीविदणिरासाए अज्जवसन्तअस्स हत्थे पडिवादे-
15 सुत्ति भणिअ मम हत्थे समप्पिदा। ता गेण्हदु अज्जो एदं।

विदूषकः। सकरुणम्। ण मे ईदिसे पत्थावे हत्थो एदं गेण्हिदुं पसरदि।

उभौ रुदतः।

सुसंगता। कृताञ्जलिः। ताएज्जेव्व अणुग्गहं करन्तो अङ्गीकरेदु अज्जो।

विदूषकः। विचिन्त्य। अध वा उवणेहि जेण इमाएज्जेव्वं साअरिआविरहदुक्खिदं
20 पिअवअस्सं विणोदइस्सं।

सुसंगतोपनयति।

विदूषकः। गृहीत्वा निरूप्य सविस्मयम्। सुसंगदे। कुदो उण ताए ईदिसस्स अलंकारस्स समागमो।

सुसंगता। अज्ज। मए वि एदं जेव्व कोदूहलेण पुच्छिदा आसि।

25 विदूषकः। तदो ताए किं भणिदं।

सुसंगता। तदो सा उद्धं पेक्खिअ दीहं णिस्ससिअ सुसंगदे किं तुह एदाए कधाएत्ति भणिअ रोदिदुं पउत्ता।

विदूषकः। कधिदं जेव्व सामण्णजणदुल्लहेण इमिणा परिच्छदेण। सव्वधा महाकिजणसंभवाए ताए होदव्वं ति। सुसंगदे। पिअवअस्सो दाणिं कहिं।

30 सुसंगता। अज्ज। एसोक्खु भट्टा देवीभवणादो णिक्कमिअ फडिअसिलामण्डवं गदो। ता गच्छदु अज्जो। अहं पि देवीए पासवत्तिणी भविस्सं।

इति निष्क्रान्तौ।

इति प्रवेशकः।

---

ततः प्रविशत्यासनस्थो राजा।

राजा। विचिन्त्य।

सव्याजैः शपथैः प्रियेण वचसा चित्तानुवृत्त्याधिकं
वैलक्ष्येण परेण पादपतनैर्वाक्यैः सखीनां मुहुः।
5 प्रत्यासत्तिमुपागता नहि तथा देवी रुदत्या यथा
प्रक्षाल्येव तथैव बाष्पसलिलैः कोपो ऽपनीतः स्वयम्॥

सोत्कण्ठं निःश्वस्य। इदानीं देव्यां प्रसन्नायां सागरिकाचिन्तैव मां बाधते। तथा हि।

अम्भोजगर्भसुकुमारतनुस्तदासौ
कण्ठग्रहे प्रथमरागघने विलीय।
10 सद्यः पतन्मदनमार्गणरन्ध्रमार्गै-
र्मन्ये मम प्रियतमा हृदयं प्रविष्टा॥

यो ऽपि मे विश्रामस्थानं वसन्तकः सो ऽपि देव्या संयतस्तिष्ठति। तत्कस्याग्रे बाष्पमोक्षं करोमि। इति निःश्वसिति।

ततः प्रविशति विदूषकः।

15 विदूषकः। राजानं दृष्ट्वा। एसो क्खु णिरन्तरुक्कण्ठापरिक्खामं पि सविसेससलाह-णीअं तणुं समुव्वहन्तो उदिदो विअ दुदिआचन्दो अधिअदरं सोहदि पिअवअस्सो। ता जाव णं उवसप्पामि। उपसृत्य। सोत्थि भवदो। दिट्ठिआ वड्ढसि देवीहत्थगदेण वि मए पुणो वि एदेहिं अच्छीहिं जं दिट्ठो सि।

राजा। दृष्ट्वा सहर्षम्। कथम्। वसन्तकः प्राप्तः। सखे। परिष्वजस्व माम्।

20 विदूषकः परिष्वजते।

राजा। वेषेणैव निवेदितस्ते देव्याः प्रसादः। तत्कथ्यतामिदानीम्। सागरिकायाः किं वर्तत इति।

विदूषको ऽधोमुखस्तिष्ठति।

राजा। वयस्य। किं न कथयसि।

25 विदूषकः। भो। अप्पिअं ति णिवेदिदुं ण पारेमि।

राजा। कथम्। अप्रियम्। व्यक्तमुत्सृष्टं जीवितं तया। हा प्रिये सागरिके। इति मोहं नाटयति।

विदूषकः। ससंभ्रमम्। समस्ससदु समस्ससदु पिअवअस्सो।

राजा। समाश्वस्य सास्रम्।

30 प्राणाः परित्यजत काममदक्षिणं मां
हे दक्षिणा भवत मद्वचनं कुरुध्वम्।
शीघ्रं न याथ यदि तन्मुषिताः स्थ नूनं
याता सुदूरमधुना गजगामिनी सा॥

विदूषकः । भो । मा अससधा संभावेहि । सक्खु देवीए उज्जइणीं पेसिदा । अदो मए अप्पिअं ति भणिदं ।

राजा । अहो । निरनुरोधा मयि देवी । वयस्य । केनैतदाख्यातम् ।

विदूषकः । भो । सुसंगदाए । अस्सं च । ताएज्जेव्व मम हत्थे केण वि कज्जेण इअं
5 रअणमाला पेसिदा ।

राजा । किमपरम् । मां समाश्वासयितुम् । तद्वयस्योपनय ।

विदूषक उपनयति ।

राजा । गृहीत्वा रत्नमालां निर्वर्ण्य हृदये विन्यस्य । अहह ।

कण्ठाश्लेषं समासाद्य तस्याः प्रभ्रष्टयानया ।
10 तुल्यावस्था सखीवेयं तनुराश्वास्यते मम ॥

वयस्य । त्वमेव परिधत्स्व येन वयमेनां दृष्ट्वा धृतिं करिष्यामः ।

विदूषकः । जं भवं आणावेदि । इति परिदधाति ।

राजा । साम्प्रतम् । वयस्य । दुर्लभं पुनर्दर्शनं प्रियायाः ।

विदूषकः । दिशो ऽवलोक्य सभयम् । भो । मा एव्वं मन्तेहि । कदा वि को वि इध संचरदि ।
15 ततः प्रविशति खड्गहस्ता वसुंधरा ।

वसुंधरा । उपसृत्य । जअदु जअदु भट्टा । एसोक्खु रुमण्णदो भाइणेओ विजअवम्मा णिअं किं पि णिवेदिदुकामो दुवारे चिट्ठदि ।

राजा । वसुंधरे । अविलम्बितं प्रवेशय ।

वसुंधरा । जं देवो आणावेदि । इति निष्क्रम्य विजयवर्मणा सह पुनः प्रविश्य च । वि-
20 जअवम्मं । एसोक्खु भट्टा । ता उवसप्पदु अज्जो णं ।

विजयवर्मा । उपसृत्य । जयति जयति देवः । देव । दिष्ट्या वर्धसे रुमण्वतो विजयेन ।

राजा । सपरितोषम् । विजयवर्मन् । अपि जिताः कोसलाः ।

विजयवर्मा । देवस्य प्रसादेन ।

राजा । साधु रुमण्वन्साधु । अचिरान्महत्प्रयोजनमनुष्ठितम् । विजयवर्मन् । तत्क-
25 थय कथाम् । अतिविस्तरतः श्रोतुमिच्छामि ।

विजयवर्मा । देव । श्रूयताम् । इतो देवादेशात्कतिपयैरेव वासरैरनेककरितुरगपदातिदुर्निवारेण महता बलसमूहेन गत्वा रुमण्वान्विन्ध्यदुर्गावस्थितस्य कोसलपतेर्द्वारमवष्टभ्य समावासयितुमारब्धवान् ।

राजा । ततस्ततः ।

30 विजयवर्मा । ततः कोसलेश्वरो ऽपि दर्पात्परिभवमसहमानो हास्तिकप्रायमात्मसैन्यं सज्जीकृतवान् ।

विदूषकः । विजअवम्मं । लहुं आचक्ख । वेवदि मे हिअअं ।

राजा । ततस्ततः ।

विजयवर्मा । देव । कृतनिश्चयश्चासौ

योद्धुं निर्गत्य विन्ध्यादभवदभिमुखस्तत्क्षणं दिग्विभागा-
न्विन्ध्येनेवापरेण द्विपपतिपृतनापीडबन्धेन रुन्धन् ।
वेगाद्वाणान्विमुञ्चन्नथ समदगजोत्पिष्टपत्तिर्निपत्य
5 प्रत्यायाद्दाक्षिणात्याधिद्विगुणितरभसस्तं रुमण्वान्क्षणेन ॥

अपि च । अस्त्रव्यस्तशिरस्त्रशस्त्रकषणैः कृत्तोत्तमाङ्गे मुहु-
र्व्यूढासृक्सरिति स्वनत्प्रहरणैर्धर्मोद्वमद्वह्निनि ।
आहूयाजिमुखे स कोसलपतिर्भग्ने प्रधाने बले

राजा । कथम् । अस्मदीयान्यपि बलानि भग्नानि ।

10 विजयवर्मा । एकेनैव रुमण्वता शरशतैर्मत्तद्विपस्थो हतः ॥

विदूषकः । जअदु जअदु भवं । जिदं अम्हेहिं । इति नृत्यति ।

राजा । साधु कोसलपते साधु । मृत्युरपि ते श्लाघ्यो यस्य शत्रवो ऽप्येवं पुरुषकारं वर्णयन्ति ।

विजयवर्मा । रुमण्वानपि कोसलेषु महत्तरं ज्यायांसं जयवर्माणं स्थापयित्वा प्रहार-
15 व्रणितं हास्तिकप्रायमशेषसैन्यमनुवर्तमानः शनैः शनैरागत एव ।

राजा । वसुंधरे । उच्यतां यौगंधरायणः । प्रदीयतां मत्प्रसादो ऽस्येति ।

वसुंधरा । जं देवो आणवेदि । इति विजयवर्मणा सह निष्क्रान्ता ।

ततः प्रविशति काञ्चनमाला ।

काञ्चनमाला । आणत्तम्हि देवीए जधा । हञ्जे कञ्चणमाले । गच्छ । एदं इन्दआलिअं
20 अज्जउत्तस्स दंसेहित्ति । परिक्रम्यावलोक्य च । एसो क्खु भट्टा । ता जाव णं उवसप्पामि ।
उपसृत्य । जअदु जअदु भट्टा । भट्टा । देवी विण्णवेदि । एसो क्खु उज्जइणीदो सम्बरसिद्धी
णाम इन्दआलिओ आअदो । ता पेक्खदु णं अज्जउत्तोत्ति ।

राजा । अस्ति नः कौतुकमैन्द्रजालिके । तच्छीघ्रं प्रवेशय ।

काञ्चनमाला । जं देवो आणवेदि । इति निष्क्रम्य पिच्छिकाव्यग्रहस्तेनैन्द्रजालिकेन
25 सह प्रविश्य । एदु एदु अज्जो ।

ऐन्द्रजालिकः परिक्रामति ।

काञ्चनमाला । एसो भट्टा । ता उवसप्पदु अज्जो ।

ऐन्द्रजालिकः । जअदु जअदु भट्टा । उपसृत्य पिच्छिकां भ्रामयित्वा ।

पणमह चलणे इन्दस्स इन्दआलम्मि लद्धणामस्स ।
30 तह अज्जसम्बरस्स वि माआसुपडिट्ठिअजसस्स ॥

देव । किं धरणीए मिअङ्को आआसे महिहरो जले जलणो ।
मज्झण्हम्मि पओसो दाविज्जउ देहि आणत्तिं ॥

विदूषकः । भो वग्रस्स । ग्रवह्दिो होहि । भो । ईदिसो से ग्रवट्ठम्भो जेण सव्वं संभावीग्रदि ।

ऐन्द्रजालिकः । देव ।

किं जप्पिएण बहुणा जं जं हिग्रएण महसि संदट्ठुं ।
5 तं तं दंसेमि ग्रहं गुरुणो मन्तप्पहावेण ॥

राजा । काञ्चनमाले । उच्यतां देवी । युष्मदीय एवायमैन्द्रजालिको विजनीकृतश्चायमुद्देशः । तदागच्छ । सहितावेवैनं पश्याव इति ।

काञ्चनमाला । जं भट्टा ग्राणवेदि । इति निष्क्रम्य वासवदत्तया सह प्रविशति ।

वासवदत्ता । हञ्जे कञ्चणमाले । उज्जइणीदो ग्राग्रदोत्ति ग्रत्थि मे तस्सिं इन्दग्रालिए
10 पक्खवादो ।

काञ्चनमाला । णादिकुलबहुमाणोक्खु एसो देवीए । ता एदु भट्टिणी ।

इति परिक्रामतः ।

काञ्चनमाला । भट्टिणि । एसो भट्टा । ता उवसप्पदु देवी ।

वासवदत्ता । उपसृत्य । जग्रदु जग्रदु ग्रज्जउत्तो ।

15 राजा । देवि । बहु तेन गर्जितम् । तदिहस्थावेवैनं पश्याव ।

वासवदत्तोपविशति ।

राजा । भद्र । प्रस्तूयतां बहुविधमिन्द्रजालम् ।

ऐन्द्रजालिकः । जं देवो ग्राणवेदि । इति बहुविधं नाट्यं कृत्वा पिच्छिकां भ्रामयन् ।

हरिहरबम्हप्पमुहे देवे दंसेमि देवराग्रं च ।
20 गग्रणम्मि सिद्धविज्जाहरबहुसत्थं च णच्चन्तं ॥

सर्वे सविस्मयं पश्यन्ति ।

राजा । ऊर्ध्वं दृष्ट्वासनादवतरन् । ग्राश्चर्यमाश्चर्यम् ।

विदूषकः । ग्रच्छरीग्रं ग्रच्छरीग्रं ।

राजा । देवि । पश्य ।

25 एष ब्रह्मा सरोजे रजनिकरकलाशेखरः शंकरोऽयं
दोर्भिर्दैत्यान्तकोऽयं सधनुरसिगदाचक्रचिह्नैश्चतुर्भिः ।
एषोऽप्यैरावतस्थस्त्रिदशपतिरमी देवि देवास्तथान्ये
नृत्यन्ति व्योम्नि चैताश्चलचरणरणन्नूपुरा दिव्यनार्यः ॥

वासवदत्ता । ग्रच्छरीग्रं ग्रच्छरीग्रं ।

30 विदूषकः । ग्रा दासीए पुत्त इन्दग्रालिग्र । किं एदेहिं देवेहिं ग्रच्छराहिं च दंसिदाहिं । जइ एदिणा परितुट्ठेण कज्जं ता साग्ररिग्रं दंसेहि ।

ततः प्रविशति वसुंधरा ।

वसुंधरा । जग्रदु जग्रदु भट्टा । ग्रमच्चो जोग्रंधराग्रणो विण्णवेदि । एसोक्खु विक्कमबा-



कुणो पधाणो अमच्चो वसुभूदी कञ्चुइणा सह अणुप्पेसिदो। तं अरिहदि देवो इमस्सिं जेव्व सुन्दरमुहुत्तए पेक्खिदुं। अहं पि कज्जसेसं समाविअ आअदो ज्जेव्वत्ति।

वासवदत्ता। अज्जउत्त। चिट्ठदु दाव पेक्खणं। माउलकुलादो पधाणो अमच्चो वसु-भूदी आअदो। तं दाव पेक्खदु अज्जउत्तो।

5 राजा। यथाह देवी। ऐन्द्रजालिकं प्रति। भद्र। विश्रम्यतामिदानीम्।

ऐन्द्रजालिकः। जं देवो आणावेदि। एक्को उण खेडणओ अवस्सं देवेण पेक्खिदव्वो।

राजा। भद्र। एवम्। द्रक्ष्यामः।

इति निष्क्रान्त ऐन्द्रजालिकः।

वासवदत्ता। कञ्चणमाले। देहि से पारितोसिअं।

10 काञ्चनमाला। जं देवी आणावेदि। इति निष्क्रान्ता।

राजा। वसन्तक। प्रत्युद्गम्य प्रवेश्यतां वसुभूतिः।

विदूषकः। जं भट्टा आणावेदि। इति निष्क्रान्तः।

ततः प्रविशतो वसन्तकेन सह वसुभूतिबाभ्रव्यौ।

वसुभूतिः। समन्तादवलोक्य। अहो वत्सेश्वरस्य भवनद्वारभासः। तथा हि।

15 आक्षिप्तो जयकुञ्जरेण तुरगान्निर्वर्णयन्वल्लभा-
न्संगीतध्वनिना हृतः क्षितिभुजां गोष्ठीषु तिष्ठन्क्षणम्।
सद्यो विस्मृतसिंहलेन्द्रविभवः कक्षाप्रदेशेष्वहो
द्वाःस्थेनैव कुतूहलेन महता ग्राम्यो यथाहं कृतः॥

बाभ्रव्यः। अद्य खलु चिरात्स्वामिनं द्रक्ष्यामीति यत्सत्यमानन्दातिशयेन किमप्यव-
20 स्थान्तरमनुभवामि। कुतः।

विवृद्धिं कम्पस्य प्रथयतितरां साध्वसवशा-
दविस्पष्टां दृष्टिं तिरयतितरां बाष्पपटलैः।
स्खलद्वर्णां वाणीं जडयतितरां गद्गदतया
जरायाः साहाय्यं मम हि परितोषोऽद्य कुरुते॥

25 विदूषकः। अग्रे भूत्वा। एदु एदु अमच्चो।

वसुभूतिः। विदूषकस्य कण्ठे रत्नमालां दृष्ट्वापवार्य। बाभ्रव्य। ज्ञायते। सैवेयं रत्न-माला या देवेन राजपुत्र्यै प्रस्थानकाले दत्तेति।

बाभ्रव्यः। अमात्य। अस्ति सादृश्यम्। तत्किं वसन्तकादवगच्छामि प्रभवमस्याः।

वसुभूतिः। बाभ्रव्य। मा मैवम्। महति राजकुले रत्नानां बाहुल्यान्न दुर्लभो भूष-
30 णानां संवादः।

विदूषकः। राजानमुद्दिश्य। एसो क्खु महाराओ। ता उवसप्पदु अमच्चो।

वसुभूतिः। उपसृत्य। विजयतां महाराजः।

राजा। उत्थाय। आर्य। अभिवादये।

वसुभूतिः । श्रेयान्भूयाः ।
राजा । आसनमासनमार्याय ।
विदूषकः । आसनमानीय । एदं आसणं । ता उवविसदु अमच्चो ।
वसुभूतिरुपविशति ।
5 विदूषकः । अमच्च । एसा देवी वासवदत्ता पणामं करेदि ।
वसुभूतिः । आयुष्मति । वत्सराजसदृशं पुत्रमाप्नुहि ।
बाभ्रव्यः । देव । बाभ्रव्यः प्रणमति ।
राजा । पृष्ठे हस्तं दत्त्वा । बाभ्रव्य । इत आस्यताम् ।
बाभ्रव्य उपविशति ।
10 राजा । आर्य वसुभूते । अपि कुशलं तत्रभवतः सिंहलेश्वरस्य ।
वसुभूतिः । ऊर्ध्वमवलोक्य निःश्वस्य च । देव । न जाने । किं विज्ञापयामि मन्दभाग्य इति ।
वासवदत्ता । सविषादमात्मगतम् । हद्धी हद्धी । किं दाणिं वसुभूदी कधइस्सदि ।
राजा । वसुभूते । कथय । पर्याकुल इवास्मि ।
बाभ्रव्यः । अपवार्य । अमात्य । चिरमपि स्थित्वा यत्कथनीयं तदिदानीमेव कथ्यताम् ।
15 वसुभूतिः । सास्रम् । न शक्यं निवेदयितुम् । तथाप्येष कथयामि मन्दभाग्यः । देव । यासौ सिंहलेश्वरेण स्वदुहिता रत्नावली नामायुष्मती वासवदत्तां दग्धामुपश्रुत्य देवाय पूर्वप्रार्थिता सती दत्ता ।
राजा । अपवार्य । देवि । किमिदमलीकं त्वन्मातुलामात्यः कथयति ।
वासवदत्ता । अज्जउत्त । अहं पि ण जाणामि । को एत्थ अलिअं मन्तेदित्ति ।
20 विदूषकः । तदो ताए किं संवुत्तं ।
वसुभूतिः । सा च युष्मदन्तिकमानीयमाना यानभङ्गात्सागरे निमग्ना । इति रुदन्नधोमुखस्तिष्ठति ।
वासवदत्ता । सास्रम् । हा हदम्हि मन्दभाइणी । हा बहिणिए । कहिं सि । देहि मे पडिवअणं ।
25 राजा । देवि । समाश्वसिहि समाश्वसिहि । दुःखग्रहा गतिर्दैवस्य । वहनभङ्गपतितोत्थितौ नन्वेतावेव ते निदर्शनम् । इति वसुभूतिबाभ्रव्यौ दर्शयति ।
वासवदत्ता । अज्जउत्त । जुज्जदि एदं । कुदो उण मे एत्तिआइं भाअधेआइं ।
राजा । अपवार्य । बाभ्रव्य । कथय । किमेतत् ।
नेपथ्ये कलकलः ।
30 हर्म्याणां हेमशृङ्गश्रियमिव निचयैरर्चिषामादधानः
सान्द्रोद्यानद्रुमाग्रग्लपनपिशुनितात्यन्ततीव्राभितापः ।
कुर्वन्क्रीडामहीध्रं सजलजलधरश्यामलं धूमपातै-
रेष प्लोषार्तयोषिज्जन इह सहसैवोत्थितो ऽन्तःपुरे ऽग्निः ॥

अपि च । देवीदाहप्रवादो ऽयं यो ऽभूल्लावणके पुरा ।
करिष्यन्निव तं सत्यं मन्ये ऽग्निरयमुत्थितः ॥

राजा । ससंभ्रममुत्थाय । कथम् । अन्तःपुरे ऽग्निः । कष्टम् । देवी वासवदत्ता दग्धा । हा प्रिये वासवदत्ते ।

5 वासवदत्ता । परित्ताअदु परित्ताअदु अज्जउत्तो ।

राजा । कथम् । अतिसंभ्रमादिहस्थापि देवी नोपलक्षिता । देवि । समाश्वसिहि समाश्वसिहि ।

वासवदत्ता । अज्जउत्त । ण अत्तणो कारणेण एव्वं भणामि । एसक्खु मए णिग्घिणाए इध संजमिदा साअरिआ विवज्जदि । ता परित्ताअदु अज्जउत्तो ।

10 राजा । कथम् । सागरिका विपद्यते । देवि । एष गच्छामि ।

वसुभूतिः । देव । किमकारण एव पतंगवृत्तिः क्रियते ।

बाभ्रव्यः । देव । युक्तमाह वसुभूतिः ।

विदूषकः । राजानमुत्तरीये गृहीत्वा । भो । मक्खु साहसं करेहि ।

राजा । उत्तरीयमाकर्षन् । धिङ्मूर्ख । सागरिका विपद्यते । किमद्यापि प्राणा धार्यन्ते ।

15 धूमाभिभवं नाटयन् ।

विरम विरम वह्ने मुञ्च धूमानुबन्धं
प्रकटयसि किमुच्चैरर्चिषां चक्रवालम् ।
विरहहुतभुजाहं यो न दग्धः प्रियायाः
प्रलयदहनभासा तस्य किं त्वं करोषि ॥

20 वासवदत्ता । कधं । मम दुक्खकारिणीए वअणादो एव्वं अज्झवसिदं अज्जउत्तेण । ता अहं पि अणुगमिस्सं ।

विदूषकः । परिक्रामन्नग्रतो भूत्वा । अहं पि पधोवदेसओ होमि ।

वसुभूतिः । कथम् । प्रविष्ट एव ज्वलनं वत्सराजः । तन्ममापि दृष्टराजपुत्रीविपत्तेर्युक्तमात्मानमाहुतीकर्तुम् ।

25 बाभ्रव्यः । सास्रम् । हा महाराज । किमिदमकारण एव भरतकुलं संशयतुलामारोपितम् । अथ वा किं प्रलापेन । अहमपि भक्तिसदृशमाचरामि ।

इति सर्वे ऽग्निप्रवेशं नाटयन्ति । ततः प्रविशति निगडसंयता सागरिका ।

सागरिका । हद्धी हद्धी । आ । समन्तदो पज्जलिदो हुदवहो अज्ज दुक्खावसाणं मे करिस्सदि ।

30 राजा । अये । इयमासन्नहुतवहा सागरिका वर्तते । तत्त्वरितमेनां संभावयामि ।

सागरिका । राजानं दृष्ट्वात्मगतम् । कधं । अज्जउत्तो । ता एदं पेक्खिअ पुणो मे जीविदासा संवुत्ता । प्रकाशम् । परित्ताअदु परित्ताअदु भट्टा ।

राजा । भीरु । अलं भयेन ।

